2nd Copy

Jagadish
Jagadishipakshalā
जागदीशीपक्षता
Sanskrit
Paper – Printed
1947 Sambat (129 years old)
33 Folio
12.5" X 4.8"
Complete

॥ श्रीगणेशाय नमः॥ अथ पक्षताशिरोमणिः॥ अनुमितिलक्षणेककार्य्यानुकूलतासङ्गत्या पक्षधर्म्मतां निरूपयितुमाह व्याप्तीति। सन्दिग्धेति। यत्र साध्यस्य यादृशसंबंधावगाहिनिर्णयनिवर्त्यो यः संशयस्तत्र तादृशसम्बन्धेन साध्यानुमितौ पक्षतेत्यर्थः तेन न पक्षसाध्यविशेष्यकसंशयाननुगमो न वा सम्बन्धान्तरेण सन्देहेऽपि निर्णीतसम्बन्धेन पक्षत्वम् न वा तमःप्रभृतिषु समवायेनाकाशादिसाधनेन द्वैकल्पम्। संशययोग्यतां निरस्यति नापीति साधकबाधकमाने सिद्धिबाधौ केवलान्वयिनि च पक्षनिष्ठाभावप्रतियोगित्वधीरेव सुलभो बाधः ननु तत्रापि पुनरनुमित्सा ततः परामर्शानन्तरं स्मरणात्मकाद्वा परामर्शादनुमितीष्टसाधनताविषयकादनुमित्सा ततोऽनुमितिरिति फलबलात्कल्पनीयमित्यत आह सिषाधयिषेति न चानुमितिजनिकेच्छैव पक्षता सा च क्वचित्स्वनिष्ठैव सर्वत्रेश्वरनिष्ठैव सुलभेति वाच्यं तस्या नित्यत्वे न सिद्धौ सत्यामपि पक्षताप्रसंगात् न च तस्यास्तदानीं न तज्जनकत्वं तद्धि न तद्योग्यता अनपायात् न च तदुपधानम् अनुमितेः पूर्व्वं तदभावात् न च तत्सामग्रीसमवधानं कारणमात्रस्य पक्षताकुक्षिनिक्षेपप्रसंगाच्छेषवैयर्थ्यात्। तदानीं सामग्रीविरहप्रयोजकव्यतिरेकप्रतियोगिनः कारणस्य वक्तव्यत्वापाताच्च। सिषाधयिषेति यत्रानुमित्सानन्तरं साध्यतद्व्याप्यवत्त्वविशिष्टपक्षस्मरणम् अनुमितीष्टसाधनताविषयकतादृशस्मरणाद्वा अनुमित्सा अनुमित्सापूर्वकालोत्पन्नविशेषणस्मरणाद्वा अनुमित्साकालोत्पन्नेन्द्रियसन्निकर्षसहितात्साध्यतद्व्याप्यविशिष्टपक्षप्रत्यक्षं तदनन्तरञ्चानुमितिस्तत्र पक्षतासम्पत्तये सहकृतान्तं साधकमानविशेषणं। सिषाधयिषा च तत्साध्यविशिष्टतत्पक्षविषयत्वप्रकारिका अनुमितिविषयिणीच्छा यत्किंचिज्ज्ञानोत्तरं ज्ञानं जायतामितीच्छायामपि सिद्धिसत्त्वेऽनुमित्यनुत्पादात् अनुमितित्वाप्रकारिकायामपि प्रत्यक्षाद्यतिरिक्तं पर्व्वते वन्हिज्ञानं जायतामितीच्छायां प्रत्यक्षाद्यनन्तरमनुमित्युत्पादाच्च यादृशया दृशेच्छासत्त्वे सिद्धौ सत्यामनुमितिस

नत्विच्छाभावसमुदायस्यविशेषणत्वादिच्छाया अननुगमेऽपिनक्षतिः धूमेनानुमिनुयामितीच्छायामालोकपरामर्शादसत्यामपिसिद्धौयत्
दिनानुमितिस्तदान्यमात्रलिंगकानुमितीच्छाकामिनीजिज्ञासादिवत् पृथक्प्रतिबन्धिकायदिचतत्रानुमितिस्तदासिद्धिसत्वे तत्रानुमितेर्वा
रणायतल्लिंगिकानुमितीच्छानदन्यमात्रलिंगिकानुमितीच्छातिरिक्तानुमितीच्छावावाव्याप्यालिंगविशेषेणापिचनियन्त्रितं पक्षत्वं तल्लिंगकानु
विर मितौसिद्धिकालीनातल्लिंगिकानुमितीच्छाविशिष्टान्यलिंगकानुमितीच्छैववाप्रतिबंधिकासाधकमानं साध्यवत्वनिश्चयः पाषाणमयत्वादि
ह ४ नापर्व्वते तेजस्त्वादिनाचवन्हेःसिद्धावपि पर्व्वतत्वेनतत्रवन्हित्वेनचनस्यानुमितेर्द्धर्म्मितसाध्यत्वयोरवच्छेदकावनुप्रवेशनीयौयदिचपर्व्व
तत्वसामानाधिकरण्येनैकत्रसाध्यसिद्धावपिविनानुमित्सामन्यत्रतादृशानुमितिरानुभविकीनदाधर्म्मिविशेषोऽपिनिवेश्योनान्यथापक्षतावच्छे
दकं सामानाधिकरण्येनसाध्यसिद्धावपितदवच्छेदेनात् पक्षतावच्छेदकावच्छेदेनानुमितिंप्रतितदवच्छेदेनसिद्धेस्तत्सामानाधिकरण्यमा
त्रेणानुमितिंप्रतितुसिद्धिमात्रस्यविरोधित्वम् इत्यञ्चलिंगभेदन्यायोऽनुसरणीयः साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकानुमितेः प्रामाणिक
त्वेनांप्रतिपक्षविशेष्यिकैवसिद्धिर्विरोधिनी एवञ्चपक्षविशेष्यकसिद्ध्यनन्तरमपिसाध्यविशेष्यिकानुमितिर्जायतेतुल्यन्यायात् समानाकारायाः
सिद्धेःप्रतिबन्धकत्वपर्य्यवसानात् तादृशानुमितिं प्रतिसिद्धिमात्रंविरोधिसाध्यप्रसिद्धिरेववाऽत एवप्रसिद्धसाध्यकस्थलेपक्षविशेष्यिकैवा
नुमितिरनुभूयतइति अत्र चव्याप्तिस्मरणादिनापूर्व्वानुमित्सानाशेपरामर्शकालेचसिद्धिसत्वेऽनुमित्सान्तरोत्पत्त्येवानुमितिस्तथैवकारणीभूत
स्यविशिष्टाभावस्यसंपत्तिरित्युपाध्यायाः। अन्येतुद्वित्रिक्षणान्तरितायामप्यनुमित्सायामनुमितिदर्शनात् अनुमित्सायोग्यतावाच्यासाचतस्यो
त्पत्त्यनन्तरंस्वविषयसिद्ध्यनुत्पादः अनुमित्सानन्तरमन्तरानुमित्यनुत्पादे दिवसादिविलम्बेनेन्द्रियादिनानिर्णीतेऽपिसाध्येलिंगपरामर्शादनुमि
नानुमितिदर्शनात्

तिप्रसंगात् किंत्वनुमित्सानन्तरं लिंगदर्शनादिक्रमेण यावता कालेनोत्सर्गतः परामर्शो जायते तावानेव कालः फलबलेन तथा कल्पनात् अ
यद्वानुमित्योत्पत्त्यनन्तरमनुमित्सानाशेपि सिद्धेः सत्त्वं यावत्कालमध्येऽनुमितिर्जायते तावानेव कालोऽनुमित्स्योपलक्षितः यदि च सिद्ध्यनन्त
रं तन्नाशेपि द्वित्रिक्षणमध्ये विनानुमित्सामनुमित्यनुत्पादोऽनुभवसिद्धस्तदा सिद्ध्यापि तावानेव समय उपलक्षणीयः विशिष्य क्षणनियमस्त्व
वहितैः करणीय इति वदन्ति। अत्र च यत्र साध्यनिर्णयेच्छानन्तरं पूर्वोक्तन्यायेन साध्यतद्व्याप्यविशिष्टपक्षस्य प्रत्यक्षं स्मरणं वा यत्र वा साध्यतद्व्या
प्यधर्मतादृशव्याप्यधर्मान्तरविशिष्टपक्षस्य तत्पक्षकसाध्यतद्व्याप्यवत्त्वानुमित्योरिष्टसाधनतायाश्चैकं स्मरणं तत्र तयोरनुमित्सानतः साध्यत
द्व्याप्यवत्त्वानुमितिस्तत्र तदनन्तरमनुमितिप्रसंगः योग्यताविवक्षणे तु सुतरामेवेति तदिच्छाविषयसिद्ध्यनुपहितत्वं तद्विशेषणं पक्षसाध्यभेदेन
च पक्षताया भेदात् पृथक्पृथगेव कार्य्यकारणभावः तथा च यत्र सिद्ध्यनन्तरं कदाप्यनुमितिर्न जाता तत्र सिद्ध्यभावमात्रं कारणं न तु तत्रेच्छानिवे
शोऽपि गौरवात् प्रयोजनाभावाच्च तेन यत्पक्षकयत्साध्यकानुमितौ कस्यापीच्छा न जाता तत्रोक्तिसाधारण्यमात्रसंपादनायेश्वरेच्छानिवेशना।
यासो नोपादेयः। यत्तु सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नाया सिद्धेः सिषाधयिषाविरहविशिष्टायास्त।
स्या अभावः पक्षता अथ तृतीयक्षणव्यवधायकद्वितीयक्षण एवाव्यवहितत्वपर्य्यवसानाद्यत्राविरलक्रमेण सिद्धिसिषाधयिषानुमितयस्त।
त्र द्वितीयक्षणे पक्षतासम्पत्तये द्वितीयः सिषाधयिषाविरहो विशेषणमस्तु सिद्धेः प्राथमिकस्तु स्वक्षणस्य किमर्थमिति चेत् न यत्र क्रमेण सिषा
धयिषाप्रात्यक्षिकसिद्धिपरामर्शानुमितयस्तत्र तृतीयक्षणे पक्षतासम्पत्त्यर्थमिति तन्न यत्रानुमित्सानाशकाले प्रात्यक्षिकी सिद्धिरथ च पराम र्शः
मर्शानुमिती तत्र पक्षताविरहप्रसंगात् अथ प्रथमक्षणमपेक्ष्य द्वितीयस्यैव द्वितीयमपेक्ष्य तृतीयस्याप्यव्यवहितोत्तरत्वं स्वध्वंसाधिकरणका २

वाच्यं॥ तच्च॥



लध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वं वा तादृशाव्यवहितोत्तरत्वं वाच्यं न तथा च यत्र क्रमेण सिद्धिसिषाधयिषानुमि
तयस्तत्र प्रथमक्षणे पक्षतावारणाय उत्तरक्षणस्य विशेषणं प्रथमं विशिष्टत्वात् द्वितीयत्तु सिद्धेस्तत्रैव द्वितीयक्षणे पक्षतासम्पत्तये यदि पुनरि
च्छाजनिकासामग्री प्रतिबध्नात्यनुमितिं तदानुमित्यव्यवहितपूर्ववर्त्तिसिद्धिभिन्नसिद्ध्यभावमात्रं पक्षतेति चेत्तादृशसिद्धीनां न तत्तद्व्यक्तित्वेना
भावः कारणं निरुक्तरूपविशिष्टत्वेन वा नाद्यः अनन्तकार्य्यकारणभावप्रसंगात् तादृशसकलसिद्धौ अनुमित्याविरहविशेषणदानस्य वैयर्थ्या
त् तत्तत्समये सम्बध्यव्यक्तीनां तत्तत्समयावच्छिन्नतत्तन्मनोयोगादीनां वा प्रतिबन्धकत्वप्रसंगाच्च नान्त्यः सत्यपि परामर्शादौ कस्याश्चिन्मिद्धेरनं
तमरनुमितिः कस्याश्चिन्नेत्यत्र नियामकाभावात् न वा कारणतावच्छेदकावच्छिन्नसमाजाधीनकार्य्योत्पादादिकं कारणतावच्छेदककोटौ नि
विशते न तथा सति उत्पत्तिकालावच्छिन्नत्वविशेषितेन स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयत्वेन स्वसमाना क
क धिकरणानुमित्यव्यवहितपूर्वक्षणोत्पन्नसविषयत्वेन स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकभिन्नसविषयं।
क त्वेन वा किं वा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवर्त्तित्वविशिष्टज्ञानत्वादिना कारणत्वं स्यात् अव्यवहितोत्तरस्य द्वितीयए व।
त्रिपु४ क्षण इति नातिप्रसंगः न चादिमेषु परामर्शस्थितिक्षणे यत्र विरोधिसिद्ध्यादि विना शक्तत्रोत्तरक्षणेऽनुमितिर्न स्यात् परामर्शस्यानयात्वादिति
वाच्यम् अनुमितिसामग्र्या विरोधिन्याविरहेण तदानीमुत्पन्नात् तदनुव्यवसायादेरन्ततः संस्काराद्यातत्संभवात् संस्कारजन्यत्वे नस्मृतित्वस्य प्रागे।
व निरासात् स्याद्वा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवृत्तिभिन्नत्वेन स्वसमानाधिकरणानुमित्यव्यवहितपूर्वत्वानधिकरणक्षणवृ
त्तित्वविशिष्टत्वेन वा स्वसमानाधिकरणानुमित्युत्पत्त्यनधिकरणासमयाव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वेन वा प्रतिबंधकत्वं तदव्यवहित

 पूर्व्वत्वञ्चतदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वं। नचात्रप्रथमेयत्रसिद्ध्यात्मकपरामर्शानन्तरंसिषाधयिषायाउत्पत्तिकालेनत्रुटीयस्य।
 कस्यापिधर्म्मस्यनविनाशोऽनन्तरंपुनरनुमितिः तत्रतदुत्पत्तिसमयेऽपिसास्यात् तत्पूर्व्वकालीनानांसर्व्वेषांतादृशपूर्ववर्त्तित्वेनाविरोधित्वा
दितिवाच्यम् अनवरतपरिस्पन्दमानापरिमितपवनादिपरमाणुचेतनसंयोगसन्तानान्तःपातिव्यक्तीनामविरतमेवोपरमात् फलानुत्पादव
लेनापितादृशकल्पनासम्भवात् कारणान्तरकल्पनेगौरवाच्चअन्वयव्यभिचारसन्देहस्यचकारणत्वग्रहाविरोधित्वात् उपादीयन्तांवातत्
तदात्मसमयविशेषसम्बन्धाएवतादृशपूर्ववर्त्तिभिन्नाभवेद्यानतत्त्रुटीयानुमितिंप्रतितत्तदीयानुमित्यव्यवहितपूर्वक्षणत्वादिनातादृश
क्षणवर्त्तित्वविशिष्टत्वादिनावाकारणत्वं तथाचोपमानादेःप्रमाणान्तरत्वंभज्येतसर्वत्रानुमितिसामग्रीसंभवात् विलीयेतचपरामर्शत्वादिना
कारणत्वंबाधकत्वादिनाचप्रतिबन्धकत्वं अनयैवरीत्याकार्य्यान्तरेष्वपिक्लृप्तानांकारणानांप्रतिबंधकानाञ्चातथात्वमक्लृप्तानाञ्चतथात्वं
प्रसज्येत —— अतएवनद्वितीयोपिप्रकारःवैयर्थ्याच्चसिद्धेः। सिषाधयिषाविरहविशिष्टस्यसिद्ध्यनुमानातिरिक्तसाधकमानयोरन्यतरस्याभा
वः कारणमितितुकेचित्तत्वसाधकमानंहिसिद्धिस्वरूपयोग्यंतदुपहितं तत्सामग्रीवानाद्यःचक्षुरादिसत्वेविनानुमितीच्छामनुमित्यभावप्रसं
गात् नद्वितीयःसिद्धेःपूर्वंतदुपहितत्वाभावेनप्रत्यक्षसामग्रीसत्वेप्यनुमित्यापत्तेःअनुमानातिरिक्तेन्यस्यवैयर्थ्याच्चनतृतीयःअनुमितिसामग्र्यभा
ववत्वेनप्रत्यक्षकारणत्वम् अनुमित्साविरहविशिष्टप्रत्यक्षसामग्र्यभाववत्वेनचानुमितिकारणत्वमित्यन्योन्याश्रयात् स्थाणुत्वाभावव्याप्यदर्शनक्षणे
प्रतियोग्यारोपविरहेणाभावप्रत्यक्षसामग्रीविरहात् पक्षतासत्वेस्थाणुत्वारोपक्षणेतदभावानुमित्यापत्तेरित्यपिकश्चित् वस्तुतस्तुस्वतन्त्रान्वयव्य 
तिरेकशालित्वान्नियमेनप्रथममुपस्थितत्वाल्लाघवाच्चप्रत्येकमेवतथात्वमन्यथाबाधादेरप्येवमेवान्तर्भावप्रसंगात् नचानुमित्साविरहस्यप्रत्येकं 

विशेषणत्वे गौरवं शाब्दसिद्धौ सत्यामशब्दं ज्ञानं जायतामितीच्छायामनुमितेरुत्पादात् सिद्धावनुमितिविषयेच्छाविरहस्य प्रत्यक्षसामग्रीसत्त्वे च
तादृशेच्छायामनुमित्यनुत्पादात् साधकमाने अनुमितित्वादिप्रकारकेच्छाविरहस्य पृथगेव विशेषणतया स्वरूपापि वाच्यत्वात् स्वनिवर्तकप्रत्य
क्षादिसामग्रीसमवहितान्यत्वादिना च तादृशेच्छयोरनुगमेऽपि गौरवम् अन्यतरत्वघटकयोरन्योन्याभावयोर्मिथो विशेषणविशेष्यभावे विनि
गमकाभावश्च आत्मनिष्ठध्वंससमवायेन सिद्धेरभावः भिन्नभिन्नेन च सम्बन्धेन न तत्तत्साधारणकारणरूपायास्तत्सामग्र्याः मणिविशिष्टस्य वन्हेरिवे
तरेतरेतरविशिष्टस्य मनोयोगादेः प्रतिबन्धकत्वायोगात् तथा च कथमनुगतरूपेण तयोरभावः कारणं एवं सिद्धेः सिषाधयिषाविरहेण वैशिष्ट्य
मेककालावच्छेदेनैकात्मवृत्तित्वं प्रत्यक्षादिकारणचक्षुःसंयोगादेस्त्वन्यादृशमिति सामग्रीविशेषाभावस्य हेतुत्वेपि लाघवात् सिद्ध्यभाव एव पक्षव्य
वहारनिमित्तं एतेनैवाभिसन्धाय प्रवृत्तिनिमित्त ——— मुक्तमितिवक्ष्यति फलानुपहितसिद्धीच्छाविरहविशिष्टसिद्ध्यभावापेक्षया बाधाभावा
स्य लघुत्वेपि सिद्धसाधनस्थलपक्षव्यवहारविरहेण तादृशसिद्ध्यभावस्यावश्यकत्वे बाधाभावेन न निवेशने गौरवात् विशिष्टसिद्ध्यभावस्य चात्मनि
ष्ठस्यैवानुमितिहेतुत्वेपि तस्य परम्परासम्बन्धादेव पर्वतादौ पक्षव्यवहार इति ध्येयम् एकस्य पुंसोऽनुमित्सासत्त्वेपि अन्यस्य तद्विरहिणः प्रत्यक्षा
दिसामग्रीसत्त्वेऽनुमित्यनुत्पादात् तत्पुरुषीयानुमितिं प्रति न तत्पुरुषीयानुमित्साविरहकालीनतत्तत्पुरुषीयसिद्धिसामग्रीविशेषविरहोऽनन्यग
तिकत्वेन हेतुरुपेतव्य इति वदन्ति। अथ सिद्ध्युत्तरानुमितौ सिषाधयिषा हेतुरस्तु न चैवं मण्यादिस्थलीयदाहं प्रत्युत्तेजकस्य हेतुत्वापत्तिः उत्तेजका
नामननुगतत्वात् तावदभावविशिष्टमण्याद्यभावस्य चाननुगतत्वादिति चेदिहापि दर्शितोऽननुगमः सिषाधयिषायाः सिद्ध्युत्तरानुमितित्वेनानु
गतानतिप्रसक्तं दुर्वचं सिद्धिस्थितिकालीनां स्वेतरसिद्धिकालीनां वानुमितिं प्रति हेतुत्वकल्पने च विनापि सिषाधयिषां सिद्धिनाशकालेऽनुमित्युत्पादे दुर्वा
धयिषां १

रः एकस्य च पुंसः सिद्धिसत्वेऽन्यस्य सिषाधयिषाभूत्यस्यानुमित्यनुत्पादप्रसंगः ननत्सुरूषी यनादृशानुमितिंप्रति सिषाधयिषाया हेतुत्वेऽनन्ता
कार्य्यकारणभावप्रसंगः अपि च सिद्धौ सत्यां विनापि सिषाधयिषां सामान्यसामग्रीतोऽनुमितिसामान्योत्पत्तिप्रसङ्गात् न हीदृशविशेषसामग्रीं विना
सामान्यसामग्र्या अनुमितिजनकत्वं नास्ति न चान्यत्रापि तद्विशेषसामग्र्यन्तरमस्तीति तत्कल्पने चातिगौरवं इह जायमाना सा सिद्ध्युत्तरैवस्यात् स
च न जायते कारणाभावादिति चेत् समाजनिष्ठानुमितिसामान्यन्तु स्यादेव कार्य्योत्पादविरहस्य विना कारणाभावमसंभवात् करणव्यापारत्वेनावश्य
ककारणभावस्य परामर्शस्य कारणतावच्छेदिकापक्षतानकारणमिति तु भ्रमः प्रतिबन्धकान्तराभाववदन्वयव्यतिरेकशालित्वेन हेतुत्वात् अ
न्यथा यथासंभवनिमित्तकारणस्य समवायिकारणत्वाद्यवच्छेदकत्वप्रसंगात् अथानुमितिसाधारणसिद्धेः प्रतिबंधकत्वे तदभावस्य मण्याद्य
भाववत् प्रतिबन्धकाभावत्वेन कार्य्यकालवृत्तेरेव हेतुत्वात् अनुमितिकाले च तदसंभवात् सा नोत्पद्येतेति चेन्न यस्य मण्याद्यभावादेः कार्य्यस
समकालतयान्वयव्यतिरेकित्वं तस्यैव तथात्वेन हेतुत्वं ननु सर्व्वस्य गौरवात् अन्यथा समवायिकारणस्य कार्य्यसहभूतस्यैव हेतुत्वात् कारणमात्र
स्य तथात्वप्रसक्तौ प्राभा‾ करा एवं विजयेरन्निति। प्राभाकरास्तु विनाप्यनुमित्सां क्वचित् परामर्शानुमितिप्रवाहस्याविरललग्नस्यानुभविकत्वा
त् कालभेदकल्पनायाञ्च मानाभावात् मानाभावाच्च पक्षतानानुमितिहेतुः परार्थानुमाने तु सिद्धसाधनमर्थान्तरविधया दूषणमित्याहुः॥ ❁ ॥ अथ
जागदीशी पक्षता॥ अनुमितिलक्षणेति। अनुमितिस्वरूपेत्यर्थः। व्याप्तिज्ञानजन्याया अनुमितेः किमन्यत्कारणमिति जिज्ञासयैव पक्षतानिरूपणा
दिति भावः अत्रानुकूलत्वं जनकजनकतावच्छेदकसाधारणप्रयोजकत्वमात्रं तेन न व्याप्तेरनुमित्यहेतुत्वेपि न क्षतिः यत्तु जनकतावच्छेदकत्वमे राम:
वात्रानुकूलत्वं व्याप्तिवत्पक्षताया अपि करणव्यापारतया सिद्धहेतुभावस्य परामर्शस्य जनकताया मवच्छेदकत्वादिति मतं तत्तुच्छं पक्षतानका ४

विनष्टज्ञानादेर्विषयतासंबंधेनानुमितिरतो वन्हिपदं॥ ⊙विशेष्यतासंबंधेनानुमितिं प्रति साध्यतावच्छेदकसंबंधेन पक्षता कारणं॥
कालिकविषयित्वादिनाऽनुमितिर्भवत्यतो विनष्टांहृदपदं॥ ❀संदिग्धाप्रामाण्यकबाधनिश्चय। सिद्ध्यात्मकअपेक्षा। बुद्ध्यात्मकपरामर्श। सिद्धिधर्मिकपरामर्श धर्मिक
अप्रामाण्यसंशय। तद्धर्मिकअप्रामाण्यनिश्चयसाध्यसंदेह। अनुमितिः॥

रणमितिनुभ्रमइत्याद्युत्तरग्रंथविरोधापत्तेः पक्षधर्मतामिति। पक्षे धर्मत्वं यस्याइति व्युत्पत्त्या पक्षतामित्यर्थः पक्षस्य धर्मत्वं धर्मविशेषः पक्षत्व
मितिवादेवतादिशब्दइवतलः स्वार्थिकत्वात् व्याप्तीतीति। न च प्रकृतग्रंथस्य रसंवलितस्यैव पाठस्य धर्तुमुचितत्वाद्व्याप्तेत्येव धारणं युक्तमिति
वाच्यम प्रयोजकत्वात् व्याप्तिनिरूपणानन्तरमित्येवं मूलपाठमनुसृत्यैवान योपन्यासादितिभावः। ननु संदिग्धसाध्यधर्मत्वमिति मूलस्य यदि
संदेहविषयीभूतसाध्यवत्त्वमर्थस्तदा विनष्टवन्ह्यादेर्जलादावनुमितिर्नस्यात्तत्र तादृशसाध्याभावेन पक्षताविरहादतः साध्यसंशयस्यैव प
क्षतात्वमाह यत्रेत्यादिना यद्धर्मिकयत्संबंधावच्छिन्नयत्प्रकारकनिश्चयत्वेन यत्संशयं प्रतिनिवर्तकत्वं स संदेहस्तत्पक्षकतद्विधेयकानुमितौ
हेतुभूता पक्षतेत्यर्थः तेन वन्हिधर्मिकघटादिनिर्णयात्मकस्य पर्वतधर्मिकवन्हिमत्त्वनिश्चयस्य निवर्तनीयोपि वह्नौ घटादिसंदेहो न पर्वतप
क्षकवन्ह्यनुमितौ पक्षतानत्र वन्हिमत्त्वनिश्चयत्वेनाप्रतिबन्धकत्वादिति भावः (अत्र निश्चयत्वावच्छिन्नत्वञ्च निश्चयत्वव्यापकत्वेन नु स्वरूप
सम्बन्धरूपं तेन प्रमेयवन्हिसाध्यके प्रमेयवन्हिमान वन्ह्यभाववान वा इत्यादिसंग्रहः) अत्र पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्तनीयत्वमा
त्रं बाधनिश्चयेऽतिव्याप्तमतः संशयपदं न च बाधनिश्चयस्य पक्षतात्वेन क्षतिः विशिष्टबुद्धिसामान्यं प्रत्येव बाधनिश्चयस्य विरोधित्वादेव तत्रा
नुमित्यसंभवादिति वाच्यं संदिग्धाप्रामाण्यकबाधनिश्चयसत्त्वे सिद्ध्यात्मकादपि परामर्शादनुमित्यापत्तेः तादृशबाधनिश्चयस्य विशिष्टबुद्धप्रति
बंधकत्वात् यद्यपि निर्वन्हिः पर्वतो रूपवान्वेत्यादिसंदेहात्मकस्य बाधनिश्चयस्य पर्वतधर्मिकवन्हिमत्तानिश्चयनिवर्त्यत्वं संशयत्वं चास्तीति
वन्हिसाध्यकपक्षतालक्षणस्य तत्रातिव्याप्तिः पक्षे साध्यसंशयत्वोक्तौ चतनानुगमवार्तापि तथापि संशयत्वमत्र तादृशनिश्चयाप्रतिबंधकत्वं न
याच पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्त्यत्वे सति तादृशनिश्चयप्रतिबंधकतावच्छेदकविषयिताशून्यज्ञानत्वं फलितार्थः तेन गृहीताप्रामा

* अप्रामाण्यज्ञानानास्कंदितत्वेन तादृशप्रतिबध्यविशेषणेसंदिग्धाप्रामाण्यकसाध्यसंदेहादनुमित्यनुत्पादापत्तेः॥ ज्ञानत्व इच्छा। अनुमि (संदे १ रणमतोच
तृ तादृशप्रतिबध्यतावच्छेदकविषयतानिरूपितकोटिताकसंशयत्वोक्तौ तन्निवारणात्॥ प्रत्यक्ष तिवारणार्थं ( हः॥ न्हौ घटादि
पर्वतो वन्ह्यभावान् इदं ज्ञानं प्रमानवेति संशयोऽतिव्याप्तिः। न्वमितिभावः)

भिन्नविषये अनुमितिसामग्रेः प्रतिबंधकत्वंमतो निश्चयत्वं॥

❀ पूर्वोक्ताप्रामाण्यसंशयेति प्रसंगसंभवे किं स्यत्कान्तरं इतिचे

ती

प्रतिबध्यतायां वक्ष्यमाणसाध्यविरोध्यकत्वायवच्छिन्नत्वाभावेन भूतत्वंघटवदित्यादि संशयवा

अथ तापक्षताकावच्छेदकावच्छिन्नविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबंधकता जन्यतानिरूपितजन० बहिर्भूतत्वं च पक्षतावच्छेदकावच्छिन्नविषयत्व कतानवच्छेदकत्वं॥ — निष्ठावच्छेदकताकप्रतियोगिताकभेद प्रतियोगितानवच्छेदकत्वं॥

जा॰ प॰ ५ ण्यकबाधनिश्चयस्य पक्षधर्मिकसाध्यवत्त्वज्ञाननिवर्तकत्वाभावेऽपि तन्निवर्तकतावच्छेदकविषयिताकत्वादेवमुदासः। यद्यपि चैवमपि वह्निव्याप्यसाध्यकानुमितौ वह्निमान्न वेति संशयः पक्षता स्यात्। तस्यापि पक्षधर्मिकवह्निव्याप्यवत्त्वरूपसाध्यनिर्णयनिवर्त्यत्वात्तादृशनिश्चयाप्रतिबन्धकत्वाच्च न चेष्टापत्तिः पर्वतो वह्निमान्न वेति संशयोत्तरं पर्वतो वह्निव्याप्यवानित्येवं साध्यनिर्णयेऽपि वह्निव्याप्यसाध्यकानुमित्यापत्तेः तथापि प्रकृतपक्षविषयितावहिर्भूतसाध्यविषयिताघटितधर्मावच्छिन्नं यत्प्रकृतपक्षधर्मिकप्रकृतसाध्यवत्तानिश्चयनिवर्त्यत्वं तन्निवेशितमित्यदोषः पर्वतो वह्निमान्न वेति संशयस्य च वह्निव्याप्यवत्तानिश्चयनिवर्त्यत्वेऽपि तादृशनिवर्त्यतायाः पर्वतधर्मिकवह्न्यभावप्रकारत्वेनैवावच्छेद्यतया वह्निव्याप्यवत्त्वरूपसाध्यवत्त्वविषयितानवच्छेद्यत्वात् न च तथापि वहिर्भूतांतदलं व्यर्थमिति वाच्यं वह्निव्याप्यवान्

अहार्यत्ववारणार्थं सधर्मपदं॥ धर्मी पर्वतो वह्निमान्न वेति संशयस्य तादृशपर्वतत्वावच्छिन्नपक्षकवह्निव्याप्यसाध्यकानुमितौ पक्षतात्वलुदासकत्वात् केचित्तु पक्षविषयितावहिर्भूतेत्याद्यपहाय साध्याभावत्वावच्छिन्नप्रकारित्वसाध्यविशेष्यकत्वान्यतरावच्छिन्नमेव साध्यनिश्चयनिवर्त्यत्वं वाच्यं तेन वह्नौ पक्षे वह्नेः साध्यतायां वह्निर्वह्निमान्न वेति संशयस्य पक्षविषयितावहिर्भावेण साध्यविषयित्वाप्रसिद्धावपि न तत्राव्याप्तिः न चैवं ह्रदादौ वह्न्यभावस्यानुमाने ह्रदो वह्निमान्न वेति संशयः पक्षता न स्यात् तन्निष्ठायास्साध्यवत्तानिश्चयप्रतिबध्यतायाः वह्निमत्ताविषयकत्वेनैवावच्छेद्यतया साध्याभावत्वावच्छिन्नप्रकारित्वानवच्छेद्यत्वमिति वाच्यमिष्टत्वात् ह्रदो वह्न्यभाववान्न वेत्याकारकसंशयस्यैव पक्षतात्वात् साध्यपक्षभेदेन पक्षताया नानात्वाद्व्याप्यवत्तासाध्ये पक्षतालक्षणएव साध्यविषयित्वघटितधर्मावच्छिन्नप्रतिबध्यतायाः प्रवेश्यत्वादितिवदंति रामः ५

वह्निव्याप्ये वह्निव्याप्यस्य साध्यतायां वह्निव्याप्यो वह्निव्याप्यवान्न वेति संशयस्य पक्षतात्वाहान्यापत्तेः तादृशनिष्ठायास्तादृशपक्षधर्मिक

वह्निसाध्यकस्थले पर्वतो वह्निमान्न वा घटोक्ता वह्निव्याप्य इत्याकारसंशयसंग्रहार्थं निश्चयत्वावच्छिन्नत्वं वक्तव्यं तथा च तदवच्छिन्नप्रतिबध्यत्वाप्रसिद्धिरतो ज्ञानत्वावच्छिन्नत्व — क २ — मा १ — दुर्वारा १ — संशय १० महानसीयवह्निसंशये इति व्याप्तिरेवास्वरस — साध्यविशेष्यक

मेव किं निश्चयत्वावच्छिन्नत्वं। इति चेत् लाघवार्थं। तादृशनिश्चयत्वविशिष्टत्वं पक्षत्वं तात्वं॥
वैशिष्ट्यं च स्वावच्छिन्नप्रतिबंधकतानिरूपितप्रतिबध्यत्व, स्वसमानाधिकरणज्ञानत्वावच्छिन्न
प्रतिबध्यतानिरूपिप्रतिबंधकतावछेदकविषयताशून्यज्ञानत्वएतदुभयसंबंधेन ॥—०॥

* साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकत्वे सति। सा
व, ध्याभाववत्तानिश्चयप्रतिबध्यतावच्छेदकविषयतावत्वं *

ताहृशसाध्यवत्तानिश्चयनिवर्त्यतायाः पक्षीभूतसाध्यविशेष्यकत्वावच्छेद्यत्वादिति ध्येयम् केचित्तु संशयत्वमत्र प्रकृतपक्षविषयितानिरूपि
तप्रकृतसाध्यनिष्ठविषयिताकत्वमतो वन्हिव्याप्यसाध्यकानुमितौ वन्हिमत्वसंशयस्य निर्वन्हित्वसाध्यकानुमितौ महानसीयवन्हिमत्व
संशयस्य न पक्षतात्वं तस्य ताहृशसाध्यपक्षोभयवैशिष्ट्यावगाहित्वाभावात् एवं च पक्षधर्मिकसाध्यवत्तानिश्चयस्यापि ताहृशत्वात्तद्वारणा
य निवर्त्यान्तमित्याहुस्तन्न साध्यं पक्षवृत्तिनवा साध्यं पक्षनिष्ठाभावप्रतियोगि न वेत्यादिसंदेहस्यापि लक्ष्यतया तत्राव्याप्यत्वात् तेषां पक्ष
साध्योभयवैशिष्ट्यानवगाहित्वात् पर्वतो वन्हिव्याप्यवान्नित्येवं साध्यनिश्चयनिवर्तनीयस्य पर्वतो निर्वन्हिर्वन्हिव्याप्यस्तु पर्वतवान्न वे
ति समूहालंबनस्य वन्हिव्याप्यसाध्यकानुमितौ पक्षतात्वप्रसंगाच्च तस्यापि वन्हिव्याप्यात्मकसाध्यपक्षोभयवैशिष्ट्यावगाहित्वात् आधे
यत्वसंबंधावच्छिन्नसाध्यविषयितायाः प्रवेशे तु पक्षस्साध्यवान्न वेत्यादिसंशयस्यासंग्रहापत्तेरिति दिक् यत्तु साध्यवत्तानिश्चयनिवर्त्यसं
शयत्वमित्यत्र संशयत्वं साध्याभावनिश्चयनिवर्त्यत्वरूपं सर्वत्र ग्राह्यमतो नोक्तदोषाणामवकाश इति तन्न उक्तं पर्वतत्वावच्छेदेन वन्हेः सा
ध्यवत्तास्थले वन्ह्यभाववत्पर्वतस्य धर्मी वन्हिमत्पर्वतो दृश्यं न वेति संशयस्य पक्षतात्वापत्तेः* तादृशसंशयस्य पर्वतत्वावच्छेदेन वन्हिनिश्च
यस्य तदवच्छेदेन वन्ह्यभावनिश्चयस्यापि प्रतिबध्यत्वादिति दिक् इदं तु चिन्त्यते अन्यत्रास्तु यथा तथापि वन्हिव्याप्यवति वन्हेः साध्यतास्थ
ले तद्धर्मिकताहृशनिश्चयप्रतिबध्यस्य संशयस्याप्रसिद्ध्याकृत्नलक्षणं नैयं वन्हिव्याप्यवान्वान्हिमान्न वेत्यादिसंशयस्याहार्यत्वेनाप्रतिबध्यत्वा
दिति ननु पक्षधर्मिकसाध्यसंशयत्वं साध्यधर्मिकपक्षवृत्तित्वसंशयत्वादिकं वा लघुलक्षणं कुतः परित्यक्तमत आह तेनेति यादृशसंबंधावगा
हित्वस्य फलमाह नवेति मूलस्यस्य साध्यधर्मवत्त्वमित्यस्य परित्यागे बीजमाह नवानम इत्यादि संदिग्धसाध्यधर्मवत्त्वमिति मूलस्य संदिग्धं॥

मिति न दोषः इति नावन्ह्यभावव्याप्यसाध्यकस्थले वन्ह्यभाववव्याप्याभावाभावात्मकवान्हिमान्नवेति संशयेऽतिव्याप्तेः॥

4 साध्य विषयकेच्छाया मतिव्याप्तिवारणाय ज्ञानत्वोपादानं। निश्चय

१ कोटित्वास्य विषयतानिवेशेन वारणात् अतो द्रव्यसंशयः॥ तथा ४

त्व २ ० अथवाभवत्वे वेति इत्यपि पाठः।

जा॰प॰ साध्ये धर्मित्वं यस्येति व्युत्पत्त्या यद्वृत्तित्वं साध्ये संदिग्धमिति यावत् किं वा संदिग्धः साध्यधर्मो यत्रेति व्युत्पत्त्या यथाश्रुतोऽर्थः तत्र प्रथमे पक्षी
६ भूततमसः समवेतत्वस्य द्वितीये च धर्मात्मकगगनसाध्यस्याप्रसिद्ध्या इदमपि लक्षणं दुष्टमित्याशयेन तमसः पक्षतया गगनस्य साध्यतयोल्लेखः
अत्र च मते पक्षे साध्यवत्तासंशयोत्तरं सिद्ध्यात्मकपरामर्शादप्यनुमितिर्भवत्येवेति बोध्यम् न चोक्तलक्षणस्य साध्यसंशयमात्रपरत्वेऽग्रिमम्
लेनस्य विशेषणत्वादिविकल्पस्यासंगतिः तत्र विशेषणोपलक्षणपदयोः साक्षात्परंपराकारणपरत्वात् संदिग्धं साध्यं यत्र तद्धर्मित्वं तत्संबन्धि
त्वमिति व्युत्पत्त्या लब्धस्य स्वविशेष्यकसाध्यसंशयसंबंधित्वरूपं यथाश्रुतार्थमादायैव विशेषणत्वोपलक्षणत्वयोरग्रे विकल्प इत्यप्याहुः तद्विकल्प
म् पक्षताविकल्पम् ननु योग्यतायाश्चानिरूपणादिति ग्रंथेनाऽग्रेऽनुमित्साया इव संशयस्यापि योग्यतया निरसिसिषितुमुचितत्वात् तद् निरसना सि
मूलस्य न्यूनत्वमत आह संशयेति सिद्धिबाधयोर्जनकस्य लिङ्गज्ञानमनोयोगादेस्सर्वत्रैवानुमितेः पूर्वसत्त्वाद्व्याचष्टे साधकेत्यादि तथा च साध
केन बाधकेन जनितं यन्मानमिति मूलेऽन्वयः ननु पक्षधर्मिकसाध्याभावनिश्चयात्मनो बाधस्य केवलान्वयिन्यप्रसिद्धिरत आह। केवलान्वयिनि
चेति पर्वतो न वाच्यत्ववानित्याकारकः पटाद्यभावे प्रतियोगितासंबंधेन वाच्यत्वावगाह्यपि बाधः खंडशः प्रसिद्धात्र संभवतीत्यावेदयितुं मूल
भेदस्योक्तं न चैवं नानाविधानां बाधबुद्धीनामनुगमासंभवः प्रातिस्विकरूपेण तेषां निवेशे तु नाप्यभावद्वयमिति मूलासंगतिर्बाधाभावस्यानेकत्वा
दिति वाच्यं पक्षधर्मिकसाध्यवत्ताज्ञानविरोधिनिर्णयत्वेन तासामनुगमादिति भावः मूले प्रत्यक्षपरिकलितमिति प्रत्यक्षपरिकलितत्वविशि
ष्टविषयकोऽनुमानजन्यो बोधस्तदिच्छावंत इत्यर्थः तेनोपजातप्रत्यक्षविषयत्वदशायामेवानुमितिविषयत्वलाभान्न वचनयोर्विरोधस्य रामः
संगतिरिति ध्येयं तत्रापीति अनुमित्सानाशस्थलेऽपि पुनरिति उत्पन्नपरामर्शानन्तरमित्यर्थः ननु पुनरनुमित्सार्थमनुमितीष्टसाधनताज्ञा ६

तस्य पूर्वमपेक्षणात्तेनैव प्राक्तनपरामर्शनाशात्कुतस्तत्रानुमितिः स्यादत आह ततः परामर्शोत्तरमिति ततोनुमितिरित्यग्रेन्वयः इष्टसाधन
त ताज्ञानपरामर्शयोः पृथक्कल्पने गौरवादाह स्मरणात्मकेति विशिष्टानुभवं प्रत्येव विशेषणज्ञानस्य सा साद्धेतुतया तादृशविशिष्टपरामर्शार्थं
विशेषणज्ञानकल्पने गौरवमपि नास्तीत्यावेदयितुं स्मरणात्मका हेत्युक्तं न चोक्तपरामर्शानंतरमनुमित्सादशायामनुमितिप्रसंगः सामग्री
सत्त्वादिति वाच्यं सिषाधयिषारूपायाः पक्षतायाः प्रागसत्त्वादिच्छासामग्र्या एव प्रतिबंधकत्वाच्चेति भावः कल्पनीयमिति न चैतावतापि प्रत्य
क्षादिभिन्नं वन्हिज्ञानं जायतां वन्ह्यनुमितिर्जायतामित्यादिरूपाणामनुमित्सात्मक्तीनामननुगतरूपविरहात्कारणत्वासंभव इति वाच्यं यद्य द
नुमित्सासत्त्व एव यत्पक्षकयत्साध्यकानुमितिस्तदनुमित्साविरहकूटत्वावच्छिन्नाभावत्वेनैव तत्पक्षकतत्साध्यकानुमितावनुमित्साया हेतु
त्वसंभवादिति भावः यत्तु यत्पक्षकयत्साध्यकानुमितिनिवर्त्याऽनुमित्सात्वेनैव तत्पक्षकतत्साध्यकानुमितौ हेतुत्वमिति त्वावच्छिन्नप्रतिबं तत्ततादृशअनुमिति
धकतानिरूपितप्रतिबध्यत्वस्योक्तावशाब्दज्ञानं जायतामित्याकारानुमित्साया असंग्रहापत्तेः तस्या अशाब्दज्ञानत्वेन प्रतिबंधकत्वात्तत्तत्
पक्षसाध्यकानुमितिनिष्ठप्रतिबंधकतामात्रस्योक्तौ च समूहालंबनतादृशानुमितिप्रतिबध्यतामादाय घटाद्यनुमित्सायामतिव्याप्त्यापत्ते
रिति ध्येयं मिश्रमतमाशंक्य निषेधयति न चेति वाच्यमित्यन्वयः अनुमितिजनकेति तत्पुरुषीयतत्पक्षकतत्साध्यकानुमितौ तादृशानुमिति
जनकेच्छैव पक्षतेत्यर्थः विषयितया धात्वर्थान्वयिन एव सप्तनः समानकर्तृत्वस्य तत्त्वादिति भावः सुलभेति तथा च घनगर्जिताद्यनुमितौ न
व्यभिचार इति भावः तस्या ईश्वरेच्छायाः तदानीं सिद्धिदशायां तत्तज्जनकत्वं तादृशानुमितिजनकत्वं तद्भिन्नतादृशानुमितिजनकत्वं ह्यनपा
यात् स्वरूपतः सत्त्वात् न च तत्पुरुषीयतादृशानुमितिं प्रति तत्पुरुषीयतादृशानुमित्यव्यवहितप्राक्क्षणवृत्तित्वविशिष्टेच्छात्वेन हेतुत्वात्

ननु तादृशानुमितित्वव्यापकप्रतिबंधकतानिरूपितप्रतिबध्यत्वोक्तौ तादृशानुमि
सायाः संग्रहो भवति इति चेत् तदनुमितिभिन्नाशाब्दज्ञानं जायतामित्याकारकानुमित्साया असंग्रहापत्तेः॥

जा॰प॰ दानींस्वरूपयोग्यत्वमेवनास्तीतिवाच्यं कार्य्याव्यवहितपूर्ववर्त्तित्वादिनाहेतुत्वस्याग्रेसार्वभौमनिरुक्तौनिरस्तत्वादितिभावः तदुपधानं
७ तादृशानुमितिविशिष्टत्वं तदभावादिति तथाचासत्यामपिसिद्धावनुमितिर्नस्यात्प्रत्युतैकानुमित्यनंतरमेवानुमित्यंतरं स्यादितिभावः
तत्सामग्रीतितत्पुरुषीयतत्पक्षकतत्साध्यकानुमितिसामग्रीविशिष्टत्वमेवतादृशानुमितिजनकत्वमित्यर्थः प्रसंगादिति तथाचपरामर्शा रा
दिकंहेतुर्नस्यात् अवच्छेदकत्वादितिभावः इष्टापत्तौबाधकमाह शेषेति तादृशानुमितिसामग्रीविशिष्टत्वेनैवहेतुत्वसंभवादिच्छाभाग
२४ स्यवैयर्थ्यादित्यर्थः नचात्रसामग्रीपदेनैकैकतत्कारणस्तोमएवधर्त्तव्यस्तथाचसिद्धिकालीनपरामर्शस्यापितादृशस्तोमविशिष्टत्वादितित
तोऽनुमितिवारणार्थमेवेच्छाभागःप्रवेशनीयःइतिवाच्यंसिद्धिदशायामिच्छान्यस्यानुमितिकारणस्तोमस्यासत्वात् अन्यथातादृशस्तोम
पा विशिष्टायाभगवदिच्छायास्तदानीमपिसत्वादिच्छानिवेशेपितत्रानुमितेर्दुर्वारत्वापत्तेःघनगर्जितादावनुरोधेननादृशेच्छायाःसामानाधिकर
ण्यप्रत्यासत्याहेतुत्वासंभवादितिभावः नन्विच्छाभागोनदेयतादृशानुमितिसामग्रीविशिष्टत्वेनैवहेतुत्ववाच्यं तथैवानुमित्सायाःसर्वत्र
हेतुत्वसंभवादित्यतआह तदानीमितिसिद्धिदशायांयत्कारणाभावप्रयुक्तःसामग्रीविरहः तत्कारणस्येत्यर्थः। वक्तव्यतापातादितितथा
चावश्यकत्वात्सैवपक्षतेतिभावः नन्वक्रमोत्पन्नानांसिद्धीच्छापरामर्शानांयुगपदसत्वात्सहकृतानंतदलंव्यर्थमतआह यत्रेतिपक्षस्मरण
मितितदनन्तरंचानुमितिरित्यग्रेऽन्वयःविशिष्टानुभवंप्रत्येवविशेषणज्ञानस्यहेतुत्वात्तदपेक्ष्यगौरवंनास्तीत्याशयेनस्मरणपर्यंतानुधाव
नं अत्रानुमित्सार्थमनुमितीष्टसाधनताज्ञानानंतरं कल्प्यमतोलाघवादाह अनुमित्त्वित्यादिति साध्यतद्व्याप्यविशिष्टपक्षस्मरणादित्य रामः
र्थः। अनुमित्सेति तदनंतरंचानुमितिरित्यग्रेणान्वयःस्मृत्यात्मकसिद्धौसहकृतानांविशेषणस्यप्रयोजनमुक्त्वाऽनुभवात्मकसिद्धौतदाहपू ७
ती तादृशस्मरणादिति २

र्वकालेत्यादिना ज्ञानेच्छयोरयौगपद्यादनुमित्साजन्मक्षणे विशेषणस्मरणस्यासंभवादुत्तरक्षणे तत्स्मरणे तु परामर्शदशायामनुमित्सा नाशात् तत्र पक्षतैव नोपेयत इत्यत उक्तं पूर्वकालोत्पन्नेति अनुमित्सापूर्वकालोत्पन्नेत्यर्थः अनुमित्सायाः पूर्वं पक्षसन्निकर्षेऽनुमित्साम व धूमवत्त्वादि साध्यकतद्व्याप्यवत्त्वेन पर्वतादेः प्रत्यक्षमेव स्याद् बहिरर्थे लौकिकप्रत्यक्षसामग्र्याः सर्वतो बलवत्त्वादनुमित्सानंतरं सन्निकर्षे च परामर्शदशायां नानुमित्सायाः सत्त्वमत उक्तमनुमित्साकालेति इदमुपलक्षणं यत्रानुमितीष्टसाधनताविषयकस्य साध्यतद्व्याप्यविशिष्टस्य प्रत्यक्षानंतरमनुमित्सा तत्रापि पक्षतासंपत्त्यर्थं सहकृतांतं बोध्यं पक्षतासंपत्तय इति न चानुमित्सादशायामपि घटाद्यवच्छेदेन तद्भाववस्यात्मनि सत्त्वात् पक्षताभंगप्रसंगः देशानवच्छिन्नविशेषणतयैव सामानाधिकरण्यरूपस्यानुमित्साविरहवैशिष्ट्यस्योक्तत्वादिति ननु सिद्धिगोचरेच्छामात्रस्य सिषाधयिषात्वे द्रव्यत्वेन द्रव्यज्ञानं जायतामितीच्छायामपि सिद्ध्यात्मकपरामर्शाद् द्रव्यानुमितिः स्यादत आह सिषाधयिषेति तत्साध्येति प्रकृतसाध्यविधेयतानिरूपितप्रकृतपक्षविषयताकत्वप्रकारिकेत्यर्थः तेन वन्हिविशिष्टह्रदाद्यप्रसिद्धावपि ह्रदो वन्हिमानित्याद्यनुमितौ न पक्षताहानिः न चापाषाणमयत्वेन पर्वते तेजस्त्वेन वन्ह्यनुमितिर्जायतामितीच्छायामपि सिद्धिदशायां पर्वतो वन्हिमानित्यनुमितिस्तदिच्छायाः पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवन्हित्वावच्छिन्नविधेयताद्यनवगाहित्वादिति भावः वन्हिमत्त्वेन पर्वतस्य प्रत्यक्षं जायतामितीच्छावारणार्थमाह अनुमितिविषयिणीति यत्किंचिदिति द्रव्यत्वेन द्रव्यगोचरज्ञानं जायतामितीच्छायामपि वन्हेः सिद्ध्यात्मकपरामर्शादनुमित्यनुत्पादादित्यर्थः तेन ज्ञानं जायतामितीच्छोत्तरं सिद्ध्युत्पादे वक्ष्यमाणस्वविषयसिद्ध्यनुपहितत्वविशेषणादेव न तदिच्छावारणं सिद्ध्युत्तरं च तादृशेच्छा न भवत्येव ज्ञानमात्रस्यैव ज्ञानत्वप्रकारिकेच्छाविरोधित्वादिति प्रयुक्तं नन्वनुमितिविषय

०ननु इच्छां प्रति इष्टसाधनता ज्ञानस्य कारणत्वात् पूर्वं तत्सत्त्वमावश्यकं। तथा च ज्ञा ३ च ५ वि ४
नं जायतामिति इच्छैव नोत्पद्यते। ज्ञानमात्रस्यैव ज्ञानत्वप्रकारकेच्छाविरोधित्वात् इति वक्तुमुचितं नत्वत इति सु चेत्। इच्छां प्रति इ

ष्टसाधनताज्ञानान्यज्ञानमात्रस्याविरोधित्वात्॥
कि किमर्थं तादृशदोषात् संधाने॥

जा॰प॰ त्वेनानुमित्साव्यक्तीनां प्रवेशे गौरवादनुमितिप्रकारिकेच्छैव प्रवेश्यतामत आह अनुमितित्वेति सिद्ध्यात्मकपरामर्शोत्तरं पर्वते वन्हिज्ञा
८ नं जायतामितीच्छैव नोत्पद्यते सिद्धिविरोधित्वात् सिद्ध्यात्मकपरामर्शपूर्वकालोत्पन्नायास्तादृशेच्छाया नानुमितावुपयोगः स्वविषयसि
द्धुपहितत्वाभावात् ततः प्रत्यक्षाद्यतिरिक्तमित्युक्तम् अनुमित्युत्पादाच्चेति तथाच व्यभिचाराल्लाघवम् किंचित्करमिति भावः ननु यत्र वन्हि
मत्वेन पर्वतस्य प्रत्यक्षं जायतामितीच्छैव प्रत्यक्षत्वेनानुमितिमवगाह्यते तत्रापि सिद्धौ सत्यामनुमित्यापत्तिः किंच प्रकृतसाध्यविधेय
तानिरूपितप्रकृतपक्षविषयताकत्वप्रकारकेच्छायाएवोत्तेजकत्वे वन्हिभिन्नान्यविधेयकानुमितिर्जायतां प्रत्यक्षादिभिन्नं वन्हिविधेय
कं ज्ञानं जायतामितीच्छायामपि सिद्ध्यात्मकपरामर्शादनुमितिर्न स्यात् तथाच तादृशतादृशेच्छानामप्युत्तेजकत्वे वाच्ये मित्यननुगमद
त्यनुत्त आह यादृशेति। सिद्धिसमानकालीनानामनुमितिप्राक्क्षणवृत्त्यायिसिषाधयिषाणामुत्तेजकविधयापक्षतायां प्रवेशो व्यर्थः कार
णतावच्छेदकगौरवापादकत्वस्यादतः सिद्धौसत्यामित्युक्तम् अनेककारानुमित्साव्यक्तीनामनुगतरूपेणोत्तेजकत्वलाभार्थं यादृशयादृ
शेत्युक्तमिति प्रांचः वस्तुतो यद्यदिच्छाव्यक्तौसत्वइत्येव वक्तव्यं अन्यथा यत्र सिद्ध्यात्मको वन्हिमात्रपरामर्शस्तत्रानुमितिर्जायतामितीच्छा
यामपि वन्ह्यनुमित्युत्पादादनुमितित्वप्रकारकेच्छात्वेनाप्युत्तेजकतया यत्र सिद्ध्यात्मको वन्हिपरामर्श एवं सिद्ध्यनात्मकद्रव्यत्वादिसाध्यकः
ती परामर्शस्तत्रानुमितिर्जायतामितीच्छादशायां वन्ह्यनुमित्यापत्तेः एवं पर्वतमात्रपक्षकात्सिद्ध्यात्मकपरामर्शाद्वन्ह्यनुमितीच्छायां पर्वते व
न्ह्यनुमितिस्तत्रवन्ह्यनुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वे यत्र पर्वते महानसे च वन्हिव्याप्यवत्वपरामर्श एव पर्वते सिध्यात्मकः तत्रापि व
न्ह्यनुमितिर्जायतामित्याकारकेच्छायां पर्वते वन्ह्यनुमित्यापत्तेः नचेष्टापत्तिरनुभवविरोधात् प्रकारांतरेण विषयपर्य्यवसानसंभवेप्यनु

पर्वतो
* यत्र वन्हिव्याप्यधूमवान् वन्हिव्याप्यधूमव्याप्यवांश्चेति समूहालंबनपरामर्शः। ततो वन्हिव्याप्यधूमानुमितिर्जायतामित्यनुमित्सा। ततः पर्वतो वन्हिमान् अ
वन्हिव्याप्यधूमवांश्चेति ~~समूहालंबनपरामर्शः~~ त्यनुमितिः। ततो नन्वयमनुमित्यापत्तिः। तद्वारणाय तल्लक्षणवृत्तिविशिष्टानुमित्सात्वेनोत्तेजकत्वमावश्यकं। तथा

रामः ८

नचतत्पक्षकतत्साध्यकानुमितित्वावच्छिन्नंप्रति पक्षतायाःकारणत्वमिति कल्पे एव तत्पक्षकतत्साध्यकानुमितित्वप्रकारिकेच्छात्वाद्यवच्छिन्नाभावोऽनुगतरूपेण पक्षतायांनिवेशनीयः ॥
किमर्थंतल्लिंगकत्वमपीतिवाच्यं ॥ यत्र धूमेन पर्वते वह्न्यनुमितिर्जायतामितीच्छा। ततो ज्ञातो कतिंगकसिद्ध्यात्मपरामर्शः। ततः पर्वते वह्न्यनुमित्यापत्तेः। नचतत्तद्वनुमि तिं प्रति तत्पर
रामर्शत्वेन कारणत्वस्यावश्यकतया तादृशपरामर्शस्य कस्याऽप्यनुमितेः कारणत्वाभावात्रापत्तिरितिवाच्यं। यत्र धूमेन पर्वते वह्न्यनुमितिर्जायतामितीच्छा। ततज्ञातो कतिंगक सिद्ध्यात्मक

मित्सानामवगतार्थगोचरज्ञानानर्जकत्वात्तस्मात्कंतु समूहालंबनस्थलीयतत्तद्व्यक्तीनामुत्तेजककोटावप्रविष्टत्वान्नदोषइति परंतु त | पारामर्शः

२ तत्साध्यक त्पक्षकर्तृलिंगकानुमित्वावच्छिन्नंप्रत्येव पक्षतायाःकारणत्वमितिकल्पेन लिंगकतत्पक्षकतत्साध्यकानुमितिप्रकारिकेच्छात्वाद्यवच्छि | ततज्ञातकाक २

न्नाभावोऽनुगतरूपेणैवपक्षतायांलाघवान्निवेशनीयो नतुतत्तदिच्छाव्यक्तीनामभावसमुदायइत्याशयेनैवयादृशेच्छेत्युक्तमितिध्ये- | लिंगकानुमितिर्जाय

यं इच्छाभावसमुदायस्येति इदमुपलक्षणं सिद्धिधर्मिकयद्यद्प्रामाण्यज्ञानसत्त्वे सिद्धिदशायामनुमितिस्तत्तदप्रामाण्यज्ञानाभावस | तामितीच्छा

मुदायस्यापि सिद्धौविशेषणत्वं बोध्यमतएव मिश्रैरनुमितिग्रंथेऽप्रामाण्यज्ञानास्कंदितायाः सिद्धेरप्रतिबंधकत्वमुक्तं नक्षतिरितियद्य | ततोवह्न्यनु

द्यपिएवमपितत्तदिच्छाविरहव्यक्तीनां विशेष्यविशेषणभावे विनिगमनाविरहेणानंतकार्यकारणभावः नचैकेच्छाविरहविशिष्टे | मितिः। तत्र

याऽपरेच्छाविरहस्तद्विशिष्टसिद्धित्वेन प्रतिबंधकत्वे सामानाधिकरण्यात्मकवैशिष्ट्यस्यद्विधाप्रवेशेगौरवमतस्तावतीनामिच्छाविर | तृतीयक्षणे

हव्यक्तीनामेकत्रद्वयमितिरीत्यायुगपदेवसिद्धिविशेषणत्वं लाघवादितिवाच्यं सिद्धौतावदिच्छाविरहवैशिष्ट्येपिसिद्ध्यंशे प्रत्येकं तत्त | पर्वते वह्न्य नुमित्यापत्तिः

दभावसामानाधिकरण्यस्य वैशिष्ट्यविधया प्रवेशात्सिद्धौतावदभाववैशिष्ट्यस्यैवतत्तदेकाभावेऽपराभाववैशिष्ट्यप्रवेशेगौरवानव | अग्निमानु

त काशात् । तथापि सिद्धौतत्तदभावानां युगपद्विशेषणत्वे वैशिष्ट्यरूपसामानाधिकरण्यवृत्तित्वांशस्य सकृदेवप्रवेशाल्लाघवं प्रत्येकाभा | मित्यनुरो

वेऽभावांतरवैशिष्ट्यस्य संबंधत्वे तु वैशिष्ट्यघटकवृत्तित्वस्य बहुशः प्रवेशेगौरवमतोयुगपदेवतावतीनामभावव्यक्तीनां सिद्धिविशेषण | धेन तादृश

त्वमुक्तम् किंच सिद्धौतावदभावस्ययुगपद्विशेषणत्वे विशेषणतासंबंधावच्छिन्नाधिकरणसमवेतत्वमेवानुगतसंबंधः तद्वृत्तिकाभावेऽप | परामर्शस्यापि कारणत्वं

राभाववैशिष्ट्यं विशेषणताविशेषावच्छिन्नाधिकरणेविशेषणतया वृत्तित्वं सिद्धौवभावांतवैशिष्ट्यं तु विशेषावच्छिन्नाधिकरणे समवेत | त्वा तःः

यद्यपि इच्छासामग्र्या एव प्रतिबंधकत्वान्नापत्तिः। नचेच्छासामग्र्याः प्रतिबंधकत्वेऽग्निमानुमित्यनुपपत्तिरितिवा(२)च्यं । विषणना१ । इच्छाप्रयोज्यत्तेजकतया इच्छाघटित | सामग्र्या
त्र प्रतिबंधकत्वात् ॥ तथापि धूमेन पर्वते वह्न्यनुमितिर्जायतामितीच्छा। ततः सिद्ध्यात्मकोऽकतिंगकपरामर्शः। ततः सिद्धिधर्मिकाप्रामाण्यज्ञानं। ततोऽनुमितिः। तत्र तृतीयक्षणे | पर्वते वह्न्य
नुमित्यापत्तेः ॥ यत्र धूमेन पर्वते वह्न्यनुमितिर्जायतामितीच्छा ततो धूमलिंगकासिद्ध्यात्मकपरामर्शः ततोऽनुमितिः तत्रानुमित्यनुपपत्तिश्चिया। तत्साध्यकत्वप्रकारता | विन्नात

त्पक्षकत्वप्रकारताभिन्नायाप्रकारता। तादृशप्रकारत्वानिरूपितानुमितित्वावच्छिन्नाविशेष्यताकेच्छात्वेनोत्तेजकत्वं वक्तुं नशक्यते॥ तथाच तल्लिंगकतत्पक्षकतत्साध्यकानुमितित्वप्र
कारिकेच्छात्वेनानुगतरूपेणैवोत्तेजकत्वं लाघवादुचितम्॥ शेषमग्रे बोध्यं। पृ १०। पं ६-१०

ज़ा॰प॰ ९ त्वमित्यनुगनवैशिष्ट्यासंभवात् एवं नैकाभावविशिष्टपराभावविशिष्टसिद्धित्वेन प्रतिबंधकत्वं किन्तु तावद्भावविशिष्टसिद्धित्वेनैवेतिदि
क्। स्वतंत्रास्तु न तदिच्छाविरहकूटविशिष्टसिद्धित्वात्तद्विनाभावस्याखंडस्य न तद्व्यक्तित्वेनैव हेतुत्वं न तद्व्यक्तित्वं च तादात्म्येन सेवध्य
क्तिरित्यदोषः चिन्तामणिकृन्मते विशिष्टाभावस्यातिरिक्तत्वात् न च कारणतामात्रस्य धर्मावच्छेद्यत्वे मानाभावादेवावच्छेदकं विनैव तादृ
शसिद्ध्यभावस्यानुमितिकारणत्वमिति प्रलापो ग्राह्यः व्यापकतागर्भायाः कारणताया अवच्छेदकस्य नानाव्यक्तिस्थलइवैकव्यक्तिस्थ
लेपि संभवेनवारयितुमशक्यत्वात् पदार्थान्तररूपायाः कारणताया अवच्छेदकस्य नानाधिकरणेष्वपि परित्यागप्रसंगादित्याहुः लिंगि
त्वमते केचित्तु पक्षधर्मिकसाध्यविधेयकानुमितित्वप्रकारिकेच्छात्वेनैवानुगतरूपेणोत्तेजकता लाघवात् इच्छान्तरस्थले च तादृशेच्छो कार
त्यत्त्यैवानुमितिस्तथैव कारणीभूतस्य विशिष्टाभावस्य सम्पत्तेरिति प्राहुः आलोकपरामर्शादिति। आलोकमात्रपरामर्शादित्यर्थः न तु धूमे।
वा ति धूमेनालोकेन च पर्वते न्यनुमितिर्जायतामितीच्छायामपि धूमलिंगकानुमित्यर्थं मात्रपदं। न चाप धूमलिंगकानुमित्साविरहविशिष्टेवा
लोकलिंगकानुमित्सा धूमलिंगकानुमितौ प्रतिबंधकेत्यर्थः अत्र यद्यपि धूमलिंगकानुमितित्वप्रकारिकेच्छात्वेनैवोत्तेजकत्वे धूमेनद्व्य
त्वस्यालोकेन च वन्हेः पर्वतेनुमितिर्जायतामितीच्छायामपि वन्हिव्याप्यधूममात्रपरामर्शाद्धूमलिंगकानुमित्यापत्तेः धूमलिंगकवन्ह्य
रके नुमितित्वप्रकारीच्छात्वेन न च वाच्यत्वे तु धूमेन महानसादावलोकेन च पर्वते वन्ह्यनुमितीच्छायामपि धूममात्रपरामर्शात्पर्वते वन्ह्यनुमि।
त्यापत्तेः न च पर्वतपक्षकधूमलिंगकवन्ह्यनुमितौ तादृशानुमितित्वप्रकारिकेच्छाविरहविशिष्टालोकलिंगकेच्छात्वेनैव प्रतिबंधकत्वं धूमेना। रामः
लोकेन वानुमितिर्जायतामितीच्छायामपि धूममात्रस्य परामर्शाद्धूमलिंगकानुमित्यभावापत्तेस्तदिच्छायाः पर्वतपक्षकवन्ह्यनुमितित्व ९

॰ न च धूमेनालोकेन वानुमितिर्जायतामितिच्छायामपि धूममात्रपरामर्शाद्धूमलिंगकानुमित्यनुपपत्तिदानमुचितं॥ किमर्थमापत्तिदानं। तदिच्छाया धूमलिंगकवन्ह्यनुमितित्वप्रका
रकत्वाभावादिति॥ तल्लिंगकतत्साध्यकानुमितित्वाप्रकारिकायाः यत्किंचित्साध्यकत्वप्रकारिकेच्छा। तदातिरिक्तानुमित्साविरहविशिष्टान्यलिंगकानुमित्सात्वेन तल्लिंगकानुमितौ प्रतिबंध
कत्वात्तानुपपत्तिः॥ अत आपत्तिदानं॥ यद्यपि तल्लिंगकतत्पक्षकतत्साध्यकानुमितित्वाप्रकारिकायाः यत्किंचित्साध्य प्रकारिकेच्छा। तदतिरिक्तानुमित्साविरहविशिष्टान्यलिंगकानु मित्सात्वे
कानुमितित्वमात्र

न च तत्र तादृशपरामर्शव्यक्तेरुत्तेजकत्वोक्तावपि। उभयलिंगकपरामर्शोत्पत्तिक्षणे न धूमलिंगकानुमित्यापत्तिः। तादृशोभयलिंगकपरामर्शाभावविशिष्टेच्छाव्यक्तेः प्रतिबंधकत्वादिति वाच्यं। यत्र धूममात्रपरामर्शः। ततो धूमालोकोभयलिंगानुमिति जायतामितीच्छा। तत उपेक्षाबुद्ध्यात्मकं तदुभयलिंगकपरामर्शः। ततो उभयलिंगकपरामर्शः ततोऽनुमितिः तादृशानुमितेः स्मात्लिंगकपरामर्शोत्पत्तिक्षणे स्यात्।

प्रकारकत्वाभावात् तथापि यद्यदिच्छाव्यक्तिदशायामालोकलिंगकानुमितीच्छाव्यक्तिसत्वेपि पर्वतधर्मिकधूमलिंगकवन्ह्यनुमितिप्रामा-
णिकी तत्तदिच्छाविरहकूटविशिष्टालोकलिंगकानुमितित्वप्रकारिकेच्छात्वेनैव तादृशधूमलिंगकानुमितिप्रतिबंधकत्वं वाच्यमत एवालोक-
लिंगिकासमानीया धूमलिंगका पर्वते वन्ह्यनुमितिः सा जायतामितीच्छासत्वे पर्वतधर्मिकधूममात्रपरामर्शान्न वन्ह्यनुमितिस्तदिच्छाव्यक्तेरु-
त्तेजकानंतर्गतत्वात् न च यत्र धूममात्रपरामर्शोत्तरं धूमालोकोभयलिंगकानुमितिर्जायतामितीच्छा न तत्र तदुभयलिंगकपरामर्शोत्पत्त्यानु-
मितिस्तत्र तदुभयलिंगकपरामर्शोत्पत्तिक्षणे धूमलिंगकानुमितिः स्यादग्निमानुमित्यनुरोधेन तदिच्छाव्यक्तेरुत्तेजकत्वादिति वाच्यं तत्र समूहा-
लंबनपरामर्शव्यक्तिविशिष्टतत्तदिच्छाव्यक्तित्वेनैवोत्तेजककोटौ निवेश्यत्वात् इत्थं चालोकेन महानसे वन्ह्यनुमितिर्जायतामितीच्छास
त्वेपि धूमपरामर्शात्पर्वते वन्ह्यनुमितिरप्रत्यूहेव तदिच्छाव्यक्तेरपि स्वस्मिन्नुत्तेजकत्वात् अत एवालोकेन वन्ह्यनुमितिर्जायतामितीच्छोत्त-
रं धूमालोकयोः समूहालंबनपरामर्शात्पर्वते वन्ह्यनुमितिर्न स्यात्तस्यापि धूमपरामर्शाव्यवहितोत्तरत्वेन धूमलिंगकानुमितित्वात्तादृशानु-
मितिविरोध्यालोकलिंगकानुमित्सायास्सत्वादिति परास्तम् तदिच्छाव्यक्तेरप्युत्तेजकत्वात्तत्र धूमलिङ्गकत्वप्रकारिकेच्छात्वेनोत्तेजकत्वा-
संभवस्यानुपदमुक्तत्वात् यत्तु पर्वतधर्मिकवन्ह्यनुमितिसामान्यं प्रत्यालोकादिलिंगकपरामर्शाभावविशिष्टालोकादिमात्रलिंगकानुमित्सा-
त्वेन प्रतिबंधकत्वं वाच्यं ननु धूमादिना तल्लिंगकानुमितित्वावच्छिन्नं प्रति तदन्यलिंगकानुमित्सात्वेन प्रतिबंधकत्वं कार्यतावच्छेदकगौरवा-
पत्तेः तथा चोक्तस्थले आलोकलिंगकपरामर्शसत्वेन तल्लिंगकानुमित्सानानुमितिप्रतिबंधिका न च मात्रपदवैयर्थ्यं धूमपरामर्शोत्तरमालो-
केन धूमेन वा वन्ह्यनुमितिर्जायतामितीच्छादशायामनुमित्यर्थं तदुपादानादिति चेन्न धूमपरामर्शदशायामालोकेन भस्मना च वन्ह्यनुमिति

त्वात् तथापि तत्र तादृशानुमितौ तदुभयलिंगकपरामर्शाभावविशिष्टतदुभयमात्रलिंगकानुमित्सात्वेन प्रतिबंधकत्वविवक्षणान्नापत्तिः। यद्यपि पूर्वोक्तस्थले पर्वतपक्षकवन्हि-
व्यकानुमित्यनुपपत्तिः। आलोकलिंगकपरामर्शाभावविशिष्टालोकलिंगकानुमित्सायाः सत्वात्। तथापि तत्र तादृशानुमितिं प्रति पर्वतपक्षकत्वप्रकारताभिन्ना वन्हिसाध्य-
त्वप्रकारताभिन्ना आलोकादिलिंगकत्वप्रकारताभिन्नाया प्रकारता तद्विनिरूपिकाया यत्किंचिल्लिंगकत्वप्रकारिकानुमित्सा तस्या एव प्रतिबंधकत्वान्नानुपपत्तिः।

४ गकानुमित्साविरहविशिष्टान्यलिंगकान्यसमवेतानुमित्सात्वे(स)ऽपि। अन्यलिंगकपरामर्शोत्तरं प्रकृतपक्षसाध्यानुमितिरुत्पादेन व्यभिचारात् कार्य्यतावच्छेदककोटौ तल्लिंगकत्वम
प्यावश्यकं॥ (न च यद्यदिच्छाव्यक्तिसत्वे अन्यलिंगकानुमित्सासत्वेत्यादिरीत्या अवश्यं विवक्षणान्न व्यभिचार इति वाच्यं। पृ १० पं ७ द्रष्टव्यं। शेषन्तु अग्रे बोध्यं॥

जा॰ प॰ जायतामितीच्छासत्वेऽप्यनुमितिप्रसंगात् आलोकपरामर्शाभावविशिष्टाया अपि तादृशेच्छाया आलोकलिंगकत्वमात्रप्रकारकत्वात्।
१० न चालोकलिंगकपरामर्शाभावविशिष्टेन धूमलिंगकत्वाप्रकारकालोकलिंगकानुमित्सात्वेन पर्वतधर्मिकवन्ह्यनुमितिसामान्यं प्रतिवि
रोधित्वान्नैष दोष इति वाच्यं भस्मलिंगकपरामर्शोत्तरमप्यालोकेन धूमेन च वन्ह्यनुमितिर्जायतामितीच्छासत्वे वन्ह्यनुमितिप्रसंगात्ता
दृशेच्छाया धूमलिंगकत्वप्रकारकत्वेनाविरोधित्वात्तस्मात्तल्लिंगकानुमितित्वावच्छिन्नं प्रति प्रागुक्तक्रमेण तत्तदन्यमात्रलिंगकानु।
मित्सात्वेन प्रतिबंधकत्वमेव सम्यगिति दिक्। यदि च तत्रेति। अन्यसाध्यकानुमित्साया इवान्यलिंगकानुमित्साया अपि स्वतः प्रतिबंधकत्वेम
नाभावादिति भवः तत्रेति सिद्ध्यात्मकालोकपरामर्शोत्तरं धूमेनानुमिनुयामितीच्छादशायामनुमितिवारणायेत्यर्थः न च तत्तदनुमित्सा।
७ (अ) व्यक्तीनामुत्तेजककोटौ प्रवेशादेव न तत्रानुमितिरिति वाच्यं यत्र सिद्ध्यात्मकालोकपरामर्शोत्तरं धूमलिंगकानुमित्सा तत्र क्रमेण सिद्ध्या।
त्मकधूमपरामर्शाद्वन्ह्यनुमितिस्तत्र धूमपरामर्शोत्पत्तिक्षणे वन्ह्यनुमित्यापत्तेः पर्वतपक्षकवन्ह्यनुमितौ न तदिच्छाव्यक्तेरप्युत्तेजकत्वा।
त् अन्यथा तत्रैव सिद्ध्यात्मकधूमपरामर्शाद्वन्ह्यनुमितिर्न स्यादिति भावः। यद्यपि वक्ष्यमाणस्वविषयसिद्ध्यनुपहितत्वविशेषणेनैव धू
मादिलिंगकतत्तत्परामर्शविशिष्टायास्तत्तदिच्छाव्यक्तेरुत्तेजकतायां न कोपि दोषः प्रागुक्तस्थले धूमपरामर्शविशिष्टानुमित्साव्यक्तिविरहसह
कृतसिद्धिसत्वादेव धूमपरामर्शोत्पत्तिदशायामपि अनुमित्यापत्तेरसंभवात् तथापि मिश्रादिसंमतमेकावच्छेदेन पक्षतापरामर्शोभयज।
न्यत्वमनुमितेः संपादयितुमनुमित्सामेवान्यथा निर्वक्ति तल्लिंगकानुमित्सेति वाच्येति परेणान्वयः ननु तल्लिंगकानुमितित्वप्रकारिकेच्छा रामः
व्यक्तीनामुत्तेजकत्वे वन्ह्यनुमितिर्जायतामितीच्छायां सिद्ध्यात्मकालोकपरामर्शादालोकलिंगकानुमितिर्न स्यात्तदिच्छाव्यक्तेरालोकलिं १०

गकत्वाप्रकारकत्वादत आह तदन्यमात्रेति धूमालोकाभ्यां वन्ह्यनुमितिर्जायतामितीच्छादशायां सिद्ध्यात्मकालोकपरामर्शादनुमि-
त्यर्थं मात्रपदं तथा च तल्लिंगकानुमितित्वाप्रकारकत्वे सति या यत्किंचिल्लिंगकानुमितित्वप्रकारिकेच्छा तदतिरिक्तानुमित्सासिषाध-
यिषापदेन वाच्येत्यर्थः तेन प्रमेयलिंगकानुमितिस्थले तदन्यलिंगाप्रसिद्धावपि न क्षतिः अत्र तदन्यमात्रलिंगकानुमित्सातिरिक्तेन विशेष- त्वं ३
णं किंतूतेजकीभूततत्तदिच्छाव्यक्तीनां परिचायकमिति मन्तव्यम् न तु तल्लिंगकानुमित्साविरहविशिष्टसिद्धिसत्त्वेप्यन्यलिंगकानुमित्सा- या ४
न्यलिंगकपरामर्शोत्तरं प्रकृतपक्षसाध्यानुमितेरुत्पादेन व्यभिचारात्कुतः पक्षतायास्तदनुमितिहेतुत्वमित्यत आह । लिंगेति लिंगविशेषनि-
यंत्रितं लिंगविशेषावच्छिन्नकार्यताकम् तथा च यद्यदनुमित्साव्यक्तिसत्त्वे सिद्धिदशायां तल्लिंगकतत्पक्षकतत्साध्यकानुमितिर्जायते
तत्तदिच्छाव्यक्तिविरहविशिष्टसिद्ध्यभावस्तल्लिंगकतत्साध्यकानुमितित्वावच्छिन्नं प्रत्येव हेतुरतो न व्यभिचार इति भावः अन्यलिंगकानु-
मित्सायास्तल्लिंगकानुमितौ स्वातंत्र्येणाविरोधित्वे पक्षतायां लिंगविशेषानियंत्रितत्वेपि न क्षतिरित्याह तल्लिंगकानुमितावितिसिद्ध्यभाव-
दशायामन्यलिंगकेच्छासत्त्वेपि तल्लिंगकानुमित्युत्पत्तेराह सिद्धिकालीनेति सिद्धिविशिष्टेत्यर्थः तल्लिंगकानुमित्सासत्त्वेऽन्यलिंगकानुमित्सा-
यास्तल्लिंगकानुमित्यप्रतिबंधकत्वादाह तल्लिंगकानुमितीच्छाविशेषविरहकूटविशिष्टेति तल्लिंगकानुमितित्वं तल्लिंगकपरामर्शाव्यवहि-
तोत्तरानुमितित्वं तथा चालोकलिंगकानुमित्सादशायां धूमालोकयोः सिद्ध्यात्मकपरामर्शोत्तरं पर्वते वन्ह्यनुमितिर्न स्यात्तस्यापि निरुक्तधूम-
लिंगकत्वेनालोकलिंगकानुमित्साप्रतिबध्यत्वादतो विशेषपदम् तेनैव वस्तुगत्या तल्लिंगकानुमितिगोचरयद्यदिच्छाव्यक्तिसत्त्वेन्यलिंगका-
नुमित्साकाले तल्लिंगकानुमितिर्जायते तत्तदिच्छाविरहकूटविशिष्टान्यलिंगकानुमित्सात्वेनैव तल्लिंगकानुमितौ प्रतिबंधकत्वमुक्तं स्थले चा-

नच उत्तेजकोटौ तल्लिंगकत्वनिवेशनं व्यर्थमिति वाच्यं । यत्र सिद्ध्यनंतरं पक्षावुद्ध्यात्मक धूमपरामर्शः । तत्र तज्ज्ञात्मा कल्लिंगकानुमित्सा । ततो धूमल्लिंगकानुमित्सा ततो धूम
ल्लिंगकानुमि(के)तिः । तादृशानुमितिस्थिती पक्षणे स्यात् सामग्रीसत्त्वात्(का) अतो तल्लिंगकत्वमप्यावश्यकं ॥

पत्र
जा. प.
११

◆अथ वा सिध्यात्मकापेक्षा बुध्यात्मकधूमपरामर्शः ततजातो कल्लिंगकानुमित्सा। तत्क्षणे अन्यपुरुषीयधूमल्लिंगकानुमित्सा॥ ततो धूमल्लिंगकानुमित्सा ततो अनुमितिः अग्रिमक्षणे तादृशानुमित्यापत्तिः॥

लोकलिंगकानुमित्साव्यक्तेरपि वस्तुगत्या धूमलिंगकानुमितित्वगोचरतया तदिच्छाव्यक्तेरुत्तेजककोटौ निविष्टत्वान्न दोषः विशेषणदास
त्वपक्षेपि तल्लिंगकानुमित्साविरहविशिष्टत्वस्योक्तरूपवार्थो ग्राह्यः अत्रापि वैशिष्ट्यमेकसमयावच्छेदेनैकात्मवृत्तित्वम् तेन पुरुषान्तरी
यतल्लिंगकानुमितीच्छामादायान्यलिंगकानुमित्सादशायां नानुमितेरुत्पादः नच तल्लिंगकानुमित्साभिन्नतदन्यलिंगकानुमित्सैव प्रति
बंधिकास्तु तल्लिंगकानुमित्साविरहविशिष्टत्वप्रवेशे गौरवादिति वाच्यं यत्र सिद्ध्यात्मकापेक्षाबुद्ध्यात्मकधूमपरामर्शोत्तरं क्रमेणालोकलिंग
कानुमितित्वप्रकारेण धूमलिंगकानुमितित्वप्रकारेणेच्छाद्वयं तत्र चतुर्थक्षणे धूमेलिंगकानुमित्यनुत्पादापत्तेः धूमलिंगकानुमित्साभिन्ना
^ऊना७६ या एवालोकलिंगकानुमित्सायाः सत्वादिति भावः अन्यलिंगकानुमित्सैव वेति वाकारोनुस्यायाम् पूर्वकल्पोक्तस्य तल्लिंगकानुमित्साविरहवि
शिष्टसिद्ध्यभावत्वेन तल्लिंगकानुमितिहेतुत्वस्य लाघवेन तदपेक्षया एतत्कल्पस्य गुरुत्वात् तत्पक्षसाध्यकानुमितौ सामान्यतः सिषाधयिषावि
रहविशिष्टसिद्ध्यभावत्वेन कारणान्तरस्याप्यत्र कल्पे वक्तव्यत्वादन्यथा सिद्ध्यात्मकपरामर्शमात्रादनुमित्यापत्तेस्तादवस्थ्यादिति ध्येयं ननु
क साधमानं सिद्धिजनकमानेन तथा च परामर्शमात्रादप्यनुमितिर्न स्यात्तस्यैव तादृशसाधकमानत्वादतो व्याचष्टे साध्यवत्तानिश्चयइति सा
ध्यवत्वसंशयेप्यनुमित्युत्पादान्निश्चय इत्युक्तम् यद्यपि साध्यवत्वनिश्चयत्वं यदि साध्यसामान्याभावाप्रकारकत्वे सति साध्यप्रकारक
त्वं तदा पर्वतः कपिलवन्हिमान्नवेति संदेहदशायां पर्वतो वन्हिमानित्यानुमितिर्न स्यात् तादृशसंदेहस्यापि वन्हिसामान्याभावाप्रकारक
त्वात् नच येन रूपेण साध्यता तन्मात्रावच्छिन्नप्रकारकत्वं निश्चयत्वं घटकमतः कपिलवन्हित्वावच्छिन्नप्रकारताकसंदेहस्य वन्हि
त्वमात्रावच्छिन्नप्रकारताकत्वाभावान्न दोष इति वाच्यं पर्वतः कपिलवन्हिमानिति निश्चयदशायामपि पर्वतो वन्हिमानित्यनुमित्यापत्ते

नुमित्सा
◆अथ वासिध्यात्मकापेक्षानुध्यात्मक धूमपरामर्शः ततो जातो कल्लिंगकानुमित्सा तत्क्षणे अन्य
रामः
११

० यद्यपि पर्वतो वन्हिमान् नित्यनुमितिं प्रति पर्वतो वन्हिमानिति निश्चयस्याप्रतिबंधकत्वापत्तिः। अन्तराभासमानविषयतायाऐक्येन। तादृशनिश्चयस्य साध्यतावच्छेदकाव
च्छिन्नप्रकारत्वान्यत्। पर्वतत्वनिष्ठप्रकारत्वनिरूपितविशेष्यताकत्वात्। तादृशप्रकारत्वान्यावच्छेदकत्वानात्मकप्रकारतो तस्य प्रतिबंधकत्वसंभवोऽपि॥ वन्हिमत्पर्वतो घटवान्
निति निश्चयस्याप्रतिबंधकत्वापत्तिः॥ तथापि साध्यतावच्छेदकावच्छिन्नप्रकारत्वविशिष्ट प्रकृतपक्षनिष्ठविशेष्यताशा

५ त्व स्तादृशनिश्चयस्य वन्हित्वमात्रावच्छिन्नप्रकारकत्वाभावात् न चेष्टापत्तिरनुभवविरोधात् अनएव गवाश्रितत्वे साध्ये सकलगवाश्रित
त्वं न हेतुरविशिष्टसाध्यवत्त्वानुमितौ विशिष्टसाध्यवत्ताग्रहस्यापि विरोधितया पक्षधर्मताग्रहदशायां सिद्धसाधनादिति शङ्कावादेमिश्रै
रप्युक्तं यदि च साध्यप्रतियोगिकाभावाप्रकारकत्वे सति साध्यप्रकारकत्वमेव साध्यनिश्चयत्वं न दारुण वन्हिशून्यः पर्वतो वन्हिमानित्ये
वं निश्चयेऽपि पर्वतो वन्हिमानित्यनुमित्यापत्तिः उक्तनिश्चयस्य वन्हिप्रतियोगिकाभावप्रकारकत्वेनाविरोधित्वात् तथापि वन्हित्वावच्छि
न्नविधेयकानुमितिं प्रति वन्हिसामान्याभावाप्रकारकवन्हिमात्रावच्छिन्नप्रकारकत्वेन कपिलवन्ह्यभावाप्रकारककपिलवन्हित्वाव
त्वान्य च्छिन्नप्रकारकत्वादिना च प्रत्येकधर्मेणैव प्रतिबंधकत्वात् नत्तत्सिद्ध्यभावकूटस्यैव पक्षतात्वं विरोधिसाध्यनिश्चयानामननुगनैकधर्माभा
प्रकार वात् वस्तुतस्तु साध्यतावच्छेदकावच्छिन्नप्रकारत्वानिरूपितप्रकृतपक्षनिष्ठविशेष्यताशालित्वमेव साध्यनिश्चयत्वं वाच्यं पर्वतः कपिल
७ वन्हिमान्नवेत्यादिसंशये तु पर्वतनिष्ठविशेष्यत्वं वन्हित्वावच्छिन्नप्रकारत्वभिन्नत्वेन कपिलवन्ह्यभावत्वावच्छिन्नप्रकारकत्वेन निरूपि
तमतस्तद्व्युदासः संशयविशेष्यतामात्रस्यैव प्रकारताद्वयनिरूपितत्वादेवं च निर्वन्हिर्वन्हिमांश्च पर्वत इत्यादिसमुच्चयस्यापि साध्यनि
श्चयत्वसंभवात् तत्त्वेऽपि न वन्ह्यनुमितिः समुच्चयस्थले प्रकारताद्वयनिरूपितविशेष्यताद्वयोपगमात् भूतलं घटवत्पटवच्चेत्यादिस्थले
भूतलस्य द्विधाभानवदत्रापि पर्वतस्य प्रकारताद्वयांशे द्वैविध्येन भानादित्यन्यत्र विस्तरः तत्र पर्वते तस्य वह्नेः धर्मित्वेतिन्नचैवं वन्हिमा
न् वन्हिमानित्येवमप्यनुमितिस्स्याद्धर्मितावच्छेदकमनन्तर्भाव्य वन्हिमत्तानिश्चयस्याविरोधित्वादिति वाच्यमिष्टत्वात् वन्हिमत्पक्षक
वन्हिसाध्यकानुमितिं धर्मितन्तर्भाव्य पक्षताया हेतुत्वाकल्पनेन नतदापत्त्यसंभवाच्च अत्र धर्मितेत्युपलक्षणं एकसंबंधेन साध्यवत्त्वनिश्चयेऽपि

० अनुमितिं प्रति समानविशेष्यता~~[illegible]~~ संबंधेन परामर्शस्य कारणत्वमिति त्यादिप्रायेण वन्हिमत्पक्षक वन्हिसाध्यक धूमहेतुकस्थले वन्हिमान् वन्हिमानित्येवमप्यनुमितिस्या
दित्यर्थः।।०।। (१ तौ ~~[illegible]~~ धर्मितावच्छेदक)

साध्यनिश्चयत्वं वन्ध्यं।। विशेष्यतायां प्रकारता वैशिष्ट्यं च स्वनिरूपितत्व।।०।।
स्वावच्छिन्नप्रतिबंधकतानिरूपितप्रतिबध्यतावच्छेदकासत्तिस्वावच्छि
न्नप्रतिबध्यतानिरूपितप्रतिबंधकतावृत्ति कार्यताविशेषता। तादृशवच्छेदका
वच्छिन्नविषयतानिरूपितत्वोभयसंबंधेन।।०।।

जा·प· विशेष्यताप्रत्यासत्त्या प्रतिबन्धकत्वं न तु सामानाधिकरण्यप्रत्यासत्त्या तथात्वं तथा सति पर्वतत्वादिविशिष्टविशेष्यकवन्ह्यादिप्रकारकानुमितौ पर्वतत्वादि ७ नु·

१२ संबंधान्तरेण साध्यानुमितेरुत्पादात् संबंधविशेषोप्यनुसरणीयः पर्वतत्वस्यावच्छेदकत्वविषयीकृत्य एकत्र पर्वते साध्यसिद्धावप्यन्यत्र प
र्वते सर्वदैवानुत्पत्तेः पर्वतत्वसामानाधिकरण्येनेत्युक्तमवच्छेदकत्वमविषयीकृत्य पर्वतत्वप्रकारेणेति तदर्थः। तादृशानुमितिः पर्वत
त्वसामानाधिकरण्येन साध्यानुमितिः। धर्मिविशेषोपीति तथा च पर्वतत्वप्रकारेण तत्पर्वतधर्मिकवन्ह्याद्यनुमितौ पर्वतत्वप्रकारेण
तत्पर्वतधर्मिकवन्ह्यादिनिश्चयत्वेनैव प्रतिबंधकत्वं वाच्यमिति भावः इदमुपलक्षणम् साध्यतावच्छेदकरूपेणैकसाध्यव्यक्तेः सिद्धा
वपि विनानुमित्साम् अन्यसाध्यव्यक्तेरनुमितेरानुभाविकत्वे साध्यविशेषोपीत्यपि द्रष्टव्यम् अन्यथेति धर्म्यन्तरेऽनुमित्यनुत्पादे तु धर्मिवि
६ प्रति शेषोपि न निवेश्य इत्यर्थः अथ तत्पुरुषीयवन्ह्यादिविधेयकानुमितिं तदीयानुमित्साविरहविशिष्टतदीयवन्ह्यादिमत्तानिश्चयत्वेनैव सम
नं विशिष्टविशेष्यकवन्ह्यादिमत्तानिश्चयत्वेन विरोधित्वे धर्मितावच्छेदकविधया पर्वतत्वमहानसत्वाद्यनेकधर्मान्तरभावेणानंतकार्य
कारणभावकल्पनापत्तेः। न च तत्रापि पुरुषभेदेनानंतकार्यकारणभावः तत्पुरुषस्यापि कश्चित्क्षणतया तद्भेदेन कार्यकारणभावनानात्व
स्यावश्यमंगीकर्तव्यत्वात् तथा चार्थवशसंपन्न एवावश्यं धर्मिविशेषस्य निवेश इति चेन्न पाषाणमयत्वेन तत्वेन तत्र वन्ह्यनुमित्युत्पत्तेः
समानविशेष्यतया प्रतिबंधकत्वासंभवात् न चैकधर्मावच्छिन्नविशेष्यत्वमेव प्रत्यासत्तिरित्यदोषः पाषाणमयत्वस्याप्येकधर्मेण यानद
वच्छिन्नविशेष्यत्वस्याप्यव्यावर्तकत्वात् न तद्धर्मावच्छिन्नविशेषतात्वेन प्रत्यासत्तिता यं तु तद्धर्मघटितसंबंधभेदेन कार्यकारणभाव
नंत्यमत्रापि तत्पुरुषस्यावच्छेदकधर्मविधया प्रवेशे गौरवं पुनरधिकं विनिगमनाविरहेण प्रकारताप्रत्यासत्त्या प्रतिबध्यप्रतिबंधकभा रामः
वकल्पनापत्तिश्च वस्तुतः समानविशेष्यतयाविरोधित्वे यत्र पर्वतत्वं च नत्व र योरेव साध्यवत्तानिश्चयात्मकः साध्यव्याप्यवत्तापरामर्शस्तदनंतरं च १२
ना १ प
पर्वते वह्निनिश्चयेपि पर्वते ५ नु·

पर्वतांशेसाध्यवत्तानिश्चयस्याप्रमाण्यज्ञानंपर्वतधर्मिकानुमितिर्जायतामितीच्छावातन्नोत्तरकालेपर्वतइवचत्वरेपिसाध्यानुमिति।
स्याद्प्रामाण्यज्ञानाभावविशिष्टस्यानुमित्साविरहविशिष्टस्यचसाध्यनिश्चयस्यचत्वरेविरहात्तादृशाप्रमाण्यज्ञानव्यक्तेरनुमि
त्साव्यक्तेर्वानुत्तेजकत्वेपर्वतेऽनुमित्यनुत्पत्तेरितिदिक्। पक्षतेत्यादिपक्षतावच्छेदकीभूतपर्वतत्वादिधर्मावच्छेद्यत्वमविषयीकृ
त्यसाध्यसिद्धावपीत्यर्थः। तदवच्छेदेनेतिपक्षतावच्छेदकीभूतपर्वतत्वावच्छेद्यत्वंविषयीकृत्यानुमितिदर्शनादित्यर्थः। तदवच्छे
देनसिद्धेरितिपर्वतत्वावच्छेद्यत्वावगाहिसिद्धेरित्यर्थः। विरोधित्वमग्रेन्वयः। तथाचपर्वतत्वावच्छेद्यत्वावगाहिपर्वतधर्मिकवह्निवि
धेयकानुमितिंप्रतिपर्वतत्वावच्छेद्यत्वावगाहिपर्वतधर्मिकवह्निमत्तानिश्चयत्वेनप्रतिबंधकत्वंतत्रचपर्वतविशेष्यकत्वंपर्वतत्ववि
शिष्टविशेष्यकत्वमात्रंतेनपर्वतत्वावच्छेदेनवह्निनिश्चयेपिपर्वतोवह्निमानित्याकारिकायाइवनीलपर्वतोवह्निमानित्याकारिकाया
अप्यनुमितेर्नोत्पत्तिः पर्वतत्वावच्छेद्यत्वंनस्वरूपसम्बन्धविशेषोमानाभावात् किंतुपर्वतत्वव्यापकसाध्यप्रतियोगिकत्वंतदपिसंसर्ग
मर्यादयैवभासतेपर्वतोवह्निमानित्याकारकानुमितौपर्वतत्वव्यापकवह्निसंयोगत्वेनैवसंयोगस्यसंबंधविधयाभानस्वीकारात् नच
पक्षतावच्छेदकव्यापकत्वमेवतदवच्छेद्यत्वमस्तुसाध्यप्रवेशोव्यर्थइतिवाच्यंपर्वतत्वावच्छेदेनतद्रूपवत्वानुमितेःप्रमात्वापत्तेः
समवायस्यैकत्वात् पर्वतत्वव्यापकसमवायेनपर्वतस्यतद्रूपव्यक्तिमत्वात् नचपर्वतत्वव्यापकवह्निसंयोगेनवह्नेःसाधनव्यापक
त्वाग्रहात् तादृशसम्बन्धेनवह्न्यनुमित्यसंभवइतिवाच्यमेकविशेषबाधसहकाराद्व्यापकतानवच्छेदकप्रकारेणैवनिरुक्तसिद्ध्यभाव
रूपपक्षतासहकाराद्व्यापकतानवच्छेदकसंबन्धेनापिसाध्यानुमितेःसामान्यपरामर्शादेवसंभवात् नचपर्वतधर्मिकवह्न्यनुमितिसा

त्वंप्रत्येव पर्वतत्वावच्छेद्यत्वा———वगाहिनिश्चयस्य विरोधित्वात् प्रतिबध्यकोटौ पर्वतत्वावच्छेद्यत्वप्रवेशोऽप्यर्थ इति वाच्यं पर्वतत्वा
वच्छेदेन सिद्ध्युत्तरं तदवच्छेदेनानुमित्सया पर्वतत्वावच्छेदेनैव तत्सामानाधिकरण्येनाप्यनुमित्यापत्तेः यत्तु पर्वतत्वावच्छेद्यत्वमेवच्छे
द्यता सम्बन्धेन पर्वतत्वादिकं वा साध्यांशे प्रकारतयैवानुमितौ भासते तथा च पर्वतः पर्वतत्वावच्छेद्यवन्हिमानित्येव पर्वतत्ववद्वन्हिम
नित्येव वानुमितिरिति प्राचीनास्तच्चिन्त्यं शिखरावच्छेदेन पर्वतो वन्हिमानित्यनुमितौ तु पक्षतावच्छेदकीभूतशिखरावच्छिन्नत्वस्वरूप
सम्बन्धरूपमेव भासते न तु व्यापकत्वलक्षणमननुभवात् एवं च तत्र शिखरावच्छेद्यवन्हिसंयोगेन वन्ह्यनुमितौ शिखरावच्छेद्यवन्हि
संयोगेनैव वन्हिनिश्चयो विरोधी न तु संयोगमात्रेणेत्यवधेयं———सामानाधिकरण्यमात्रेणेति। पक्षतावच्छेदकरूपेण
पक्षे साध्यानुमितित्वमेव तत्सामानाधिकरण्येनानुमितित्वं तच्च पक्षतावच्छेदकावच्छेदेनानुमितावप्यस्तीत्यतो मात्रपदं सिद्धिमा
त्रस्येति तत्र॥ पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमितित्वं न तदवच्छेद्यत्वानवगाह्यनुमितित्वं पर्वतत्वावच्छेदेन तत्सामाना
धिकरण्येन च परामर्शद्वयात्पर्वतत्वावच्छेद्यत्वावगाहि तदनवगाह्यनुमित्योर्युगपदुत्पादप्रसंगात् सामग्रीसत्त्वात् किंतु यद्रूपेण सा
ध्य [illegible]वच्छेदकसंबंधत्वं तादृशधर्ममात्रावच्छिन्नसंसर्गताकपक्षधर्मिकसाध्यानुमितित्वं निरुक्तस्थले च संयोगनिष्ठद्विविधसंसर्गता
कसमूहालंबनानुमितिस्वीकारात् तथा च संयोगत्वमात्रावच्छिन्नसंसर्गताकपर्वतधर्मिकवन्हिविधेयकानुमितिं प्रति संयोगत्वविशि
ष्टसंसर्गताकपर्वतधर्मिकवन्हिमत्तानिश्चयत्वेनैकरूपेण सिद्धिद्वयं प्रतिबंधकं पर्वतत्वावच्छेदेनानुमितौ तु संयोगनिष्ठसंसर्गता॥

न संयोगत्वमात्रावच्छिन्नाकिंतु पर्वतत्वावच्छेद्यवन्हिसंयोगत्वावच्छिन्नैवेति पर्वतत्वसामानाधिकरण्येन सिद्धिसत्वेपि न दुरुक्तिः न
चैवं संयोगमात्रेण वन्हिनिश्चयेपि पर्वतीयसंयोगेन वन्ह्यनुमितिस्स्यात्तस्याश्च पर्वतीयत्वविशिष्टसंयोगेन वन्हिनिश्चयेपि संयोगमा
त्रेण पर्वते वन्ह्यनुमितिरिति वाच्यमिष्टत्वात् सामान्यघटितविशेषप्रकारेण चतादृशसंबन्धेनापि सिद्धेः सामान्यानुमितिविरोधित्वात्
एवमनयैव दिशान्यत्रापि प्रतिबंधकमूह्यमिति संक्षेपः इत्थं चेति पक्षतावच्छेदकावच्छेदेन सिद्ध्युत्तरं तत्सामानाधिकरण्यमात्रे
णानुमित्सायामपि तदवच्छेदेनानुमित्युत्पत्तेः तादृशानुमितौ पक्षतावच्छेदकावच्छेदेनानुमित्सैवोत्तेजिका वाच्या एवं पक्षतावच्छेद
कसामानाधिकरण्येन सिद्ध्युत्तरं तदवच्छेदेनानुमित्सायामपि तत्सामानाधिकरण्येनानुमित्यनुत्पत्तेस्तादृशानुमितौ पक्षतावच्छेदक
सामानाधिकरण्यमात्रेणानुमित्सैवोत्तेजिका वाच्येति लिंगविशेषनियंत्रितमिवानुमितिविशेषेणापि नियंत्रितपक्षत्वं यद्वा तत्सकल
त्साध्यकानुमितिं प्रत्येव सामान्यतः पक्षता हेतुः पक्षतावच्छेदकावच्छेदेनानुमितौ तदवच्छिन्नसिद्धिकालीनतत्सामानाधिकरण्यमात्रे
णानुमित्सा पृथक् प्रतिबंधिका पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमितावपि सामानाधिकरण्येन सिद्धिकालीना तदवच्छेदेनानु
मित्सा पृथक् प्रतिबंधिका वाच्या यदि चासत्यामपि समानाकारकसिद्धौ पक्षतावच्छेदकावच्छेद्यत्वावगाह्यनुमित्सायां सत्यां तत्सामाना
धिकरण्यावगाह्यनुमितेर्नोत्पादस्तदा सिद्धिकालीनत्वं प्रतिबंधकत्वेन प्रवेश्यमिति भावः साध्यविशेष्यकेति विनानुमित्सामित्यादिः तां
प्रतीति पक्षविशेष्यकानुमितिं प्रतीत्यर्थः समानाकारेति तथा च संयोगसंबन्धावच्छिन्नाधेयतासंबंधेन पर्वतनिष्ठप्रकारतानिरूपित
वन्हित्वावच्छिन्नविधेयताकानुमितिं प्रति तादृशसंबन्धावच्छिन्नपर्वतनिष्ठप्रकारतानिरूपितवन्हित्वावच्छिन्नविशेष्यताकनि

१ पर्वतो वन्हि

जा॰प॰ ऽप्यन्यत्वेन विरोधित्वं विधेयत्वं तु न प्रकारतानियतं किन्तु पर्वते वन्हिः मानित्याद्यनुमितौ पर्वते वन्हिमनुमिनोमि न तु वन्हौ पर्वतमित्यनुभ
१४ वसाक्षिको विषयताविशेषः क्वचिद्विशेष्यवृत्तिरपीति नासिद्धिः अत एव गुणानां गुणत्वमित्यत्र विशेष्यीभूतस्यापि गुणत्वस्य विधेयत्व
मनुसंधायैरिति ध्येयम् न च पक्षविशेष्यकसिद्ध्युत्तरं साध्यविशेष्यकानुमितिर्न कुत्राप्यनुभवसिद्धेत्यत आह तादृशेति पक्षनिष्ठ
प्रकारतानिरूपितसाध्यविशेष्यकानुमितिं प्रतीत्यर्थः सिद्धिमात्रमिति साध्यविशेष्यिका पक्षविशेष्यिका च सिद्धिर्विरोधिनी इत्यर्थः प
र्वतो वन्हिमानिति निश्चयोत्तरं वन्हौ पर्वतव्याप्यवत्तापरामर्शाद्वन्हिः पर्वते इत्यनुमितौ च वन्हेर्न विधेयत्वं किन्तु पर्वतस्यैव तथात्वं यद्वा
प्यवत्ताज्ञानजन्यत्वमनुमितौ तदंश एव विधेयतास्य विषयतास्वीकारादिति भावः नन्वेवं प्रसिद्धसाध्यकपरामर्शात्सर्वत्रैव पक्षसाध्यो
भयविशेष्यकानुमितिः स्यात् पक्षतासाध्यसत्त्वेनोभयधर्मावच्छिन्नसामग्रीसत्त्वादित्यस्वरसाज्ज्ञापकाच्च साध्यज्ञानत्वेनैव साध्यविशेष्यका
नुमितिं प्रति विरोधित्वमाह साध्यप्रसिद्धिरेवेति एवकारेणानुमित्साया उत्तेजकत्वस्यापि प्रतिक्षेपः सूचितः साध्यज्ञानमात्रस्य विरोधिता
यामनुभवमपि प्रमाणमाह अत एवेति साध्यविशेष्यकानुमितौ तज्ज्ञानमात्रस्य विरोधित्वादेवेत्यर्थः इत्थं च धूमव्यापकवन्ह्यभाववा
न्ह्रद इत्यादिव्यतिरेकपरामर्शजन्यायाः ह्रदे धूमाभाव इत्याद्यभावसाध्यकानुमितेरेव साध्यविशेष्यकत्वात्तत्रैव साध्यज्ञानं विरोधीति मं
तव्यं वन्ह्याद्यभावसाध्यकस्थले तु विशेष्यविधया वन्ह्यादिविधेयकानुमितेरलीकतया तां प्रति साध्यज्ञानत्वेन विरोधित्वासंभवादि
ति ध्येयं विशेष्यत्वास्य विधेयतावच्छेदकत्वसंबंधेनानुमितिसामान्यं प्रत्येव वा प्रकारतासंसर्गेण ज्ञानमात्रस्य प्रतिबंधकत्वं वाच्यं राम:
न चैवमपि गोत्वाभाववान् गोत्वव्यापकसास्नाशून्य इत्याकारकपरामर्शाद्गोत्वाभावे गोत्वं नेत्येवं पक्षनिष्ठप्रकारतानिरूपितसाध्यवि १४

न्वय ×४

धेयकानुमितिर्न स्यात्परामर्शस्यैव साध्यज्ञानत्वेन विरोधित्वादिति वाच्यमिष्टत्वात् गोत्वाभाववान् गोत्ववानित्येवं पक्षनिष्ठविशेष्यतानि
रूपितसाध्यविधेयताकानुमितेरेव तत्रोत्पादात् साध्यतावच्छेदकधर्मावच्छिन्नपक्षनिष्ठप्रकारतानिरूपितसाध्यविधेयकानुमिति न२ व्यतिरे
त्वेनैव वा प्रतिबध्यत्वं वाच्यमित्यपि कश्चित् वस्तुतस्तु अप्रसिद्धसाध्यकपरामर्शस्य विशेष्यविधया साध्यविधेयकानुमितित्वाव क^३
च्छिन्नं प्रत्येव हेतुत्वमन्यथा गोत्वाभावव्याप्यवत्वप्रकारकपरामर्शजन्यायां विशेषणविधया गोत्वाभावविधेयकानुमि
तौ व्यभिचारापत्तिः तथा चोक्तस्थले गोत्वाभाववान् गोत्ववानित्यपि नानुमितिर्विशेषणविधया गोत्वाभावविधेयकानुमितौ गोत्वव्याप
काभाववत्तापरामर्शस्याहेतुत्वात् तथाविधगोत्वाभावानुमितिहेतोर्गोत्वाभावव्याप्यवत्तापरामर्शस्य विरहेण कारणबाधात् प्रसि
द्धाप्रसिद्धसाध्यकोभयपरामर्शयोः प्रसिद्धाप्रसिद्धसाध्यकोभयानुमित्यनुगतधर्मावच्छिन्नं प्रत्यनुगतरूपेण हेतुत्वसद्भावत्वा
दित्यन्यत्र विस्तरः व्याप्तिस्मरणादिनेति यत्रानुमित्सोत्तरं व्याप्तिस्मरणं ततः सिद्ध्यात्मकपरामर्शस्तत्रेत्यर्थः तथैव तथा सत्येव विशिष्ट
भावस्येति अनुमित्साविरहविशिष्टसिद्ध्यभावस्येत्यर्थः मिश्रमतमाह अन्ये त्विति अनुमित्सायामिति सिद्धिदशायामिति शेषः वाच्यमिति
सिषाधयिषापदेनेत्यादि स्वोत्पत्तिइत्यादिसप्तपदं तत्तदनुमित्सापरं तथा च तत्तदनुमित्सोत्पत्त्यनन्तरत्वविशिष्टतत्तदनुमित्साविषयसि
—— द्धि×भावो योग्यस्तेनेत्यर्थः सिद्धिकालीनयदनुमित्साव्यक्तिदशायामुत्तरकालमनुमितिर्भविनातत्तदनुमित्साव्यक्तिविषयीभूतसि
द्धिप्रागभावस्य वर्तमानसिद्ध्यनन्तरदशायामपि सत्त्वात्तदानीमनुमितेर्वारणाय विशिष्टान्तं तत्तदनुमित्सोत्पत्त्यनन्तरत्वं तु नं तत्तदनुमित्सो
त्पत्तिध्वंसविशिष्टत्वं तथा सत्यनुमित्सोत्पत्त्यनन्तरक्षणेऽनुमित्यपलापापत्तेः सिषाधयिषोत्पत्तिक्षणेऽनुमित्सोत्पत्तिध्वंसविशिष्टस्य तद्धि
न्यायाँ ॥=॥ ४ अप्रामाण्यज्ञानानास्कंदितस्यैव तद्व्यापकाभावपरामर्शस्य तदभाववानुहेतुत्वात्॥

३(×प्रागभा) (त्सा)३

*व्याप कसास्ता भावव त्तापरा मर्शएव तदंशेऽप्र प्रामाण्य ज्ञानास्कं तोयत्तगो त्वाभाव व्याप्य वत्तानि श्चयरू पः तज्ज

षयसिद्धिप्रागभावस्यासत्त्वात् किंतु तत्तदनुमित्साप्रागभावविरहविशिष्टत्वं वैशिष्ट्यं चैककालावच्छेदेनैकात्मवृत्तित्वमिति नातिप्रसंगः तत्तदनुमित्साप्रागभावविरहविशिष्टत्वमात्रोक्तावनुमित्सोत्तरमनुमित्युत्पादे पुनरनुमित्यापत्तिरतस्तत्तदनुमित्साविषयसिद्धिप्रागभावपर्यन्तानुधावनं न च सिद्धिकालीनानुमित्सया स्वविषयीभूतैकानुमित्युत्पाददशायामपि दिनान्तरभाविस्वविषयीभूताऽनुमित्यन्तरप्रागभावसत्त्वादुत्तरकालमनुमित्यन्तरापत्तिरिति वाच्यं तत्तदनुमित्साप्रागभावविरहविशिष्टस्य तत्तदनुमित्साविषयीभूतसिद्धिप्रागभावकूटस्य विवक्षितत्वात् उक्तस्थले चोत्पन्नानुमितेरेव प्रागभावस्यासत्त्वादिति भावः इन्द्रियादिनेति अनुमानेन साध्यनिर्णये तु स्वविषयसिद्ध्यनुत्पाद एतन्न स्यादित्यादिति भावः यद्यपि स्वपदेनानुमित्युपधायकतत्तदनुमित्साव्यक्तीनामुपग्रहे दिवसान्तरीयानुमित्साव्यक्तेर्योग्यतायामप्रवेशान्नैष दोषस्तथापि वन्ह्यनुमितित्वप्रकारेणानीतानुमितिगोचरेच्छया सिद्धिकाले वन्ह्यनुमितिर्न स्यात्तद्विषयानुमितिप्रागभावकूटस्य तदानीमसत्त्वात् तत्तदनुमित्साव्यक्तिपूर्वक्षणावृत्तित्वेन तत्तदनुमित्साविषयसिद्धीनां तत्तदनुमित्साकालीनत्वे न वा —

न तत्तदनुमित्साविषयसिद्धिप्रागभावानां विवक्षया कथंचिदुपपादनेऽप्यनुमितिद्व — यं जायतामितीच्छया मनुमितिद्वयं न स्यात्तदनुमित्साविषयीभूतानुमितिप्रागभावकूटस्य प्रथमानुमित्युत्पत्तिदशायामसत्त्वात्तादृशानुमित्साया अपि मिश्रैरुत्तेजकत्वोपगमादित्यादिदूषणं द्रष्टव्यमुत्सर्गतः बाधकं विनानेनानुमित्सोत्तरं यत्र परामर्शविरोधिज्ञानापसरणक्रमेण चिरकालोत्तरं परामर्शोत्पादस्तत्र सिद्धिदशायां न योग्यता अत एव वक्ष्यति फलबलेनेति तावानेव काल इति सेत्यनुषज्यते नन्वेतादृशकालस्योत्तेजकत्वे किं मानमत आह फलेति नन्वयत्रानुमित्सोत्तरं परामर्शस्तत्र [illegible]त्यन्तकालानामुपादाने यत्र सिद्ध्यात्मकपरामर्शोत्तरमनुमित्सा तत्रानुमितिर्न स्यात्तत्रात्यन्तकालानाम

त्तेजकत्वादत आह अथवेति उपलक्षित इति तथा चानुमित्यां नाशाधिकरणतत्तत्कालोऽनुमित्याद्यक्षणमप्युत्तेजकमित्याशयः तावाने
वेति सिद्धिनाशोत्तरमपि यावत्कालमध्येऽनुमितिर्नोत्पद्यते तावत्काल इत्यर्थः। ननु क्रियात्मकानां यावत्स्वसमयानामभावस्य सर्वदैवात्म
निसत्त्वात्लोक्तयोग्यताविरहस्याप्यनुमित्सानाशोत्तरमनुमितेः संभव इत्यत आह विशेष्येति तथा च जन्यमात्रस्य कालोपाधितयात्मा
समवेतेन तज्ज्ञानादिकमेव तादृशसमयो वाच्य इत्यदोषः अवहितैरिति भावे क्तः तेनावधानैरित्यर्थः समकर्मकस्यावपूर्वस्य धाधातोः प
चत्यादेरिव कर्तरि क्तस्याप्युत्पन्नत्वादिति ध्येयम् अनुमित्साव्यक्तीनामिव तत्तन्नाशाधिकरणक्षणानामप्युत्तेजकविधया पक्षतायां निवे
त्साम नुमि शेगौरवं विनाऽनुमित्युत्पादस्य संदिग्धत्वादित्यरुचेरसौ वदंतीत्युक्त्या सूचितः उत्तानास्तु द्वे द्रव्ये इत्यादिलौकिकप्रत्यक्षान्यथानुपपत्त्या
ऽपेक्षाबुद्धीनामिवानुमित्सानाशोत्तरसिद्धिदशोत्पन्नतत्तदनुमित्यन्यथानुपपत्त्या प्रागुत्पन्नसिषाधयिषाव्यक्तीनामेव त्रिचतुःक्षणाव
स्थायित्वं कल्पयितुमुचितं विशेषगुणानां नाश्यनाशकभावस्य विशेषत एव विश्रामात् द्वितीयक्षणे नाशसामग्र्या नावश्यकत्वादित्या आ
हुः साध्यनिर्णयेति साध्यनिर्णयत्वप्रकारकेच्छानन्तरमित्यर्थः। पूर्वोक्तन्यायेनानुमित्साप्रागुत्पन्नविशेषणज्ञानादिक्रमेण प्रत्यक्षमिति
तत्र तदनन्तरमनुमितिप्रसंग इति परेणान्वयः। तथाविधप्रत्यक्षस्य विशिष्टानुभवतया तज्जनकविशेषणज्ञानादिकल्पने गौरवादाह स्म
रणेति ननु यद्यपि इच्छासत्त्वे सिद्धिदशायामनुमितिर्जायते तत्तदिच्छाव्यक्तीनामेवोत्तेजकतया पक्षतायामंतर्भावात्साध्यनिश्चयत्वप्रकारके
च्छायाः क्वापि पक्षतायामनिवेशान्नातिप्रसंग इत्यत आह यत्रवेति यत्र साध्यवान् साध्यव्याप्यवान् साध्यव्याप्यधर्मव्याप्यवांश्च पक्षः प
क्षे साध्यानुमितिस्तत्र व्याप्यवत्तानुमितिश्चेष्टसाधनमित्येकं स्मरणमित्यर्थः अत्रानुमित्सादशायामनुमितेर्वारणार्थं साध्यवत्त्वं निवेशितं

दू

योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वात्॥

जा·प·
१६

मानसत्तावच्छिन्नं प्रत्येवेच्छासामग्र्याः प्रतिबंधकत्वमतेन यानुमितेर्वारणासंभवात् साध्यव्याप्यवत्त्वस्य तद्व्याप्यधर्मान्तरवत्त्वस्य च निवेशो
नुमित्सोत्तरं साध्यतद्व्याप्यवत्त्वयोरनुमित्स्यर्थ मन्यथा परामर्शविरहेणोत्तरकालं साध्यानुमित्यापत्त्यसंभवात् इष्टसाधनत्वं पुनरनुमित्स्या
पाः सामग्रीसंपत्त्यर्थं निवेशितमिति द्रष्टव्यं तयोरिति साध्यतद्व्याप्ययोरित्यर्थः अनुमितिप्रसंगः साध्यानुमितिप्रसंगः तत्तदिच्छाव्यक्तिसत्त्वे
सिद्धिदशायामनुमित्युत्पादेन तस्या अप्युत्तेजकत्वादिति भावः मिश्रमतेप्याह योग्यतेति पुनरामिति तत्रानुमितिप्रसंग इत्यत्वयः अनुमि
त्सानाशेप्यनुमितिमंगीकर्तुरनुमित्सासंभवे पुनरांतरापत्तिसंभवादिति भावः तदिच्छेति यद्यदिच्छाव्यक्तिरुत्तेजिका स्वविषयसिद्ध्यभावव
शिष्टत्वं तद्विशेषणमित्यर्थः यद्यपि एवमपि यत्रोक्तस्थल एव साध्यानुमितिद्वयेष्टसाधनतागोचरस्मरणात्साध्यानुमितिद्वयं प्रकारानुमित्सा त ६
तत्रैकानुमित्यनंतरं साध्यानुमित्यंतरं तस्यानुप्रथमानुमित्युत्पादे नानुमित्सायाः स्वविषयसिद्ध्युपहितत्वात् तादृशेच्छायामुक्तविशेषणाप्र
क्षेपेपि यत्र प्रात्यक्षिकसिद्ध्युत्तरं वह्न्यनुमितित्वप्रकारेणैव वह्निप्रत्यक्षगोचराविसंवादिनीच्छा तत्र वह्न्यनुमितिर्न स्यात् अनुमित्सायाः स्व
विषयीभूतप्रात्यक्षिकसिद्ध्युपहितत्वेन तदनुपहितत्वविशिष्टानुमित्सायाः विरहसहकृतायाः सिद्धेः सत्त्वात् तत्तद्येन रूपेण सिद्धेस्तादृशेच्छावि
षयत्वं तद्रूपावच्छिन्नसिद्ध्यभाववैशिष्ट्यं विवक्षितं तथा च वह्न्यनुमितित्वावच्छिन्नाभाववैशिष्ट्यस्य तदिच्छाव्यक्तौ सत्त्वान्न दोष इति वाच्यं
यत्र पक्षे यस्य साध्यस्य प्रत्यक्षं कदाचिदपि न जातं तत्पक्षकतत्साध्यकप्रत्यक्षा❀तिरिक्तं ज्ञानं जायतामितीच्छाया अनुत्तेजकत्वाप
त्तेः येन रूपेण यत्रेच्छाविषयत्वं तादृशस्य तत्पक्षकतत्साध्यवत्ताप्रत्यक्षाभिन्नज्ञानत्वस्याखंडस्याप्रसिद्धेः तथाप्युत्तेजकीभूतयद्यदि राम:
च्छाव्यक्तौ यादृशया यादृशसिद्धिः प्रतिबंधिका तादृशतादृशसिद्ध्यनुपहितत्वं तत्तदिच्छाविशेषणं तेन यत्पक्षकयत्साध्यकप्रत्यक्षसमप्रसि १६

घ

❀॥ यत्नानुमित्यात्मकसिद्ध्यात्मपरामर्शः। ततः तद्व्यक्तिभिन्नं प्रत्यक्षाद्यतिरिक्तं ज्ञानं जायतामितीच्छा ततोऽनुमितिः। तत्रानुत्तेजकत्वापत्तिरित्यर्थः।

नामेव परामर्शदशायामवश्यं सिद्धिसंभवेन तदभावस्याहेतुत्वेनैषामेतत्सर्वेषामनुमितिप्रसंगादिति ध्येयम् अभिप्रमतमाक्षिपन्नाह तेनेति सर्वत्र पक्षतामात्रमनुमित्सानियन्तु
त्वं तत्रापि तादृशप्रत्यक्षभिन्नज्ञानत्वप्रकारकेच्छायां तत्पक्षसाध्यकानुमितिरेव प्रति बाधिकास्तीति तदनुपहितत्वमेव तदिच्छायां वि
शेषणमित्यदोषः ननु यत्पक्षसाध्यकानुमित्साकस्यापि नोत्पन्ना तत्र सिद्ध्यभावत्वमपेक्ष्य निरुक्तसिद्ध्यभावत्वेन हेतुत्वं गौरवग्रस्तमत।
आह पक्षसाध्येत्यादि यत्रेति ययोः पक्षसाध्ययोरित्यर्थः सिद्ध्यभावमात्रमिति गौरवस्याप्रामाणिकत्वमपाकरोति। प्रयोजनेति इदमुपल
क्षणं यत्र पक्षे साध्यवत्ताज्ञानोत्तरं कदाप्यनुमितिर्नोत्पन्ना तत्र साध्यवत्ताज्ञानाभावमात्रकारणनिश्चयत्वमपि न निवेशनीयं एवं यत्रैक
विधानुमित्साया उत्तरमनुमितिस्तत्र तादृशानुमित्सैव पक्षता न तथा यत्पक्षसाध्यकपरामर्शकालीनसिद्धिदशायामवश्यमनुमित्सा तत्र प
क्षता नानुमितिहेतुरिति निर्दिष्टव्यं यत्तु यत्पक्षसाध्यकानुमितिस्थले परामर्शदशायां नियमतः सिद्ध्यभावस्तत्र सिद्ध्यभावोपि न हेतुरिति तन्म
न्दं तादृशस्थले मानाभावात् योगिविशेषस्य निष्प्रयोजकत्वेनेत्यर्थः धात्वर्थसमानकर्तृकेच्छायामेव सनो विधानादनुमितिगोचराया अपीश्व
रेच्छाया अनुमातृनिष्ठत्वाभावेन सिषाधयिषाशब्देन बोधयितुमशक्यत्वादायास इत्युक्तं सिषाधयिषानाशेपि द्वित्रिक्षणाभ्यन्तरे सिद्धिस
त्वेऽनुमितेः सम्पादकं सार्वभौमोक्तप्रकारमुपन्यस्यति यत्त्विति सिषाधयिषाविरहविशिष्टो यः स्वक्षणः तदव्यवहितोत्तरक्षणोत्पत्तिकानुमि
तिको यो यस्तद्भिन्ना या सिषाधयिषाविरहविशिष्टा सिद्धिस्तस्याभावः पक्षता इत्यर्थः अत्रानुमित्सानाशकालोत्पन्नसिद्ध्यात्मकपरामर्शा
त्य दनुमित्युत्पत्त्यर्थं भिन्नान्तं सिद्धिविशेषणं सिद्धिमात्रस्यैव भामशः स्वक्षणोत्तरपदं किं चित्क्षणोत्पत्तिकानुमितिकतया तद्भिन्नाया अपरमसिद्धेर
भावस्येदानीं सिद्ध्यात्मकपरामर्शस्थलेपि सत्त्वादनुमित्यापत्तिरत उक्तमव्यवहितेति सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरत्वं
च सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति तादृशसमयध्वंसाधिकरणत्वं तत्र क्षणपदं विहाय स्वसमय।

जा॰प॰ ध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति तादृशस्वसमयध्वंसाधिकरणत्वमित्युक्तौ यत्र क्रमेणानुमित्सासिद्धिपरामर्शानुमितयस्तत्र
१७ सिद्ध्युत्पत्तिकालपर्यन्तस्थायिनमनुमित्सापूर्वकालोत्पन्नस्थूलकालोपाधिमादाय परामर्शक्षणेपि पक्षताविरहप्रसंगः सिद्ध्यधिकर
णतादृशोपाधेरनुमित्सापूर्वकालाद्यवच्छेदेन सिषाधयिषाविरहविशिष्टतयानुमित्साविरहविशिष्टनिरुक्तस्वसमयाव्यवहितोत्त
रत्वस्य परामर्शक्षण एव पर्यवसानात्तदानीं चानुमित्यनुत्पत्त्या न सिद्धेरपि निरुक्तानुमितिकभिन्नतयाऽनुमितेः प्रतिबंधकत्वादतः प्र
थमक्षणपदं तथा च तत्र। सिषाधयिषाविरहविशिष्टः स्वक्षणः परामर्शोत्पत्तिक्षण एवेति तदव्यवहितोत्तरोत्पत्तिकानुमितिकत्वान्न त
त्सिद्धिविरोधिनीत्यदोषः सत्यं तन्मात्रोक्तौ च सिद्धिमात्रस्यैव प्रायशः स्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणीभूतस्वपूर्वकालोत्प
त्तिकानुमितिकतया तद्भिन्नसिद्धेरप्रसिद्धिः स्यादतः स्वसमयध्वंसाधिकरणत्वदलं यत्र क्रमेण सिद्धिपरामर्शौ तत्रानुमितिप्रसंगः परामर्
शपर्यन्तस्थायिनः प्रहरादिरूपस्थूलकालोपाधेर्निरुक्तस्वक्षणाव्यवहितोत्तरतया सिद्धिपूर्वदंडाद्यवच्छेदेनानुमित्युत्पत्तिमत्तया च सि
द्धेः स्वक्षणाव्यवहितोत्तरकालोत्पत्तिकानुमितिकत्वेनाविरोधित्वादतो द्वितीयक्षणपदं न च स्थूलकालोपाधेरेव स्ववृत्तियावद्ध्वंसविशि
६ ष्टना[illegible]शांशक्षणत्वादुक्तदोषतादवस्थ्यं यदुपाध्यवच्छिन्नस्याव्यवहितोत्तरक्षणत्वतदवच्छेदेनानुमित्युत्पत्तिमत्त्वस्य विवक्षितत्वा
त्क्षणिकांत्यशब्दानामतिरिक्तपदार्थस्य वा क्षणत्वमने यथाश्रुतार्थस्यैव सम्यक्त्वाच्च उत्पत्तिपदानुक्तौ एकानुमित्युत्पत्त्युत्तरमनुमित्यं न२
तरापत्तिः स्वस्वक्षणाव्यवहितोत्तरक्षणवृत्ति[illegible]कानुमितिकत्वेन तदन्यमितिकत्वेन तदन्यसिद्धेरभावादतस्तदुपात्तं न च स्वक्षणाव्यव रामः
हितोत्तरक्षणवृत्तित्वेनानुमितिकत्वमेव प्रवेश्यतामुत्पत्तेः स्वोत्तरत्वापेक्षया गुरुत्वादिति वाच्यं यत्र साध्यस्यानुमितिद्वयं जायते तामितीच्छया १७

^स्य२ ति१ ^स्वा२
७२ योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वात्

४ यदिप्रथमस्यप्रयोजनंदत्वाअंतिमस्यप्रयोजनंपृच्छतितदायत्रसिद्धिसिषाधयिषानुमितयःतत्रायत्रचसिषाधयिषाऽसिद्ध्यनुमितयःतत्रचास्यत्वद्द्येऽपिअंतिमस्यप्रयोजनविवक्षणीयतयाग्रंथगौरवंस्यादित्यर्थः॥

प्रथमंसाध्यतद्व्याप्ययोरपेक्षानुध्यात्मिकाएकानुमितिःनतःसाध्यानुमित्यन्तरंनत्रसाध्यानुमित्यन्तरप्रसंगात्॥ अनुमितिस्तुस्वसमा
नाधिकरणप्रकृतपक्षसाध्यविषयिणीचग्राह्यानानतःपुरुषांतरीयानुमित्यादिकमादायातिप्रसंगःस्वलक्षणाव्यवहितोत्तरक्षणोत्पत्तिका
ध नुमितिकभिन्नस्यप्रागुत्पन्नस्यव्याप्तिस्मरणादेःपरामर्शमात्रस्यस्थलेसत्वात्तत्रपक्षता —— संपत्त्यर्थंसिद्धिपदमितिभावःग्रंथला
घवार्थमंतिमस्यसिषाधयिषाविरहपदस्यव्यावृत्तिमभिधानएवप्रथमस्यप्रयोजनंपृच्छतिअथेतितृतीयक्षणेतितृतीयक्षणस्यव्यवधा
यकेत्यर्थःसिद्धीतिपरामर्शात्मकसिद्धीत्यर्थःसंपन्नयेतिअन्यथास्वलक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिद्धेःसत्वात्तत्रपक्ष
६ विरह तानस्यादितिभावःद्वितीयोद्वितीयसिषाधयिषापदेनपरित्याज्यःसिषाधयिषाविरहस्यैकत्वेनद्वितीयत्वायोगादेवमग्रेपिप्रथमिकत्वमिति। ष्य:८
सिषाधयिषाविरहेत्यनुषज्यतेस्वलक्षणस्येतिविशेषणमित्यनुषज्यतेयद्यपिसिषाधयिषाविरहविशिष्टंयत्स्वंतदधिकरणाव्यवहितोत्त
रेत्यादिक्रमेणस्वस्यापिविशेषणत्वमनुमित्साविरहस्यसंभवतितथापिस्वस्मिन्सिषाधयिषाविरहवैशिष्ट्यस्यसामानाधिकरण्यरूपस्य
प्रवेशेगौरवात् इत्याशयेनस्वलक्षणस्येत्युक्तंयत्रेत्यादिसिषाधयिषासिद्ध्योर्युक्रमेऽनुमितिप्राक्कालेसिद्धिसामान्याभावएवसंभवत्यतः अ५
क्रमेणेत्युक्तंसिद्धेरनुमित्यात्मकत्वेऽनुमित्सायाःस्वविषयसिद्ध्युत्पादेनचरितार्थतयानोत्तरकालमनुमितिर्नकस्यापिसंमताइतिव्यर्थंतत्रपक्षता
संपादनमतःप्रात्यक्षिकपदंपक्षतासंपत्त्यर्थमितिअन्यथातत्रस्वलक्षणाव्यवहितोत्तरक्षणोत्पत्तिकभिन्नायाःसिषाधयिषाविरहविशि
ष्टसिद्धेःसत्वादनुमितिर्नस्यादितीत्थंचतत्रसिद्धेःसिषाधयिषाविरहविशिष्टस्वलक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वात्तदन्यसि
द्ध्यभावस्यसत्वान्नपक्षताहानिःनचसिषाधयिषाविशिष्टस्यापिसिद्धिक्षणस्यघटाद्यवच्छेदेनसिषाधयिषाविरहवत्वादुक्तदोषतादवस्थ्यम्

१ स्वा तत्ते इ३ विरह २

जा॰प॰ वच्छेदकशरीरावच्छेदेनसिषाधयिषाविरहवैशिष्ट्यस्यविवक्षितत्वादितिभावः।अत्रयत्रसिषाधयिषाघटादीच्छासिद्ध्यात्मकपरामर्शा
१८ नुमितयःक्रमेणजाताःतत्रेच्छाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नायाःसिषाधयिषाविशिष्टायाःसिद्धेःस
त्वात् अनुमितिर्नस्यादतःइच्छामपहायसिषाधयिषापर्यंतमनुसृतंएवंघटेच्छासिद्ध्यात्मकपरामर्शानुमितिवारणायद्वितीयसिषाधयि
षायाःप्रवेशइतिभावः।प्रसंगादितिद्वित्रिक्षणाद्यंतरितानुमित्सास्थलेप्यनुमितिस्वीकारेणइष्टापत्त्यसंभवादितिभावः।उक्तंदोषंनिरसितुमा
शंकते अथेतिप्रथममित्यादि।तथाचस्वसमयध्वंसाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणत्वेसतिस्वसमयध्वंसाधिकरण
त्वमेवाव्यवहितोत्तरत्वंवाच्यंतच्चतृतीयक्षणेऽनुमित्युत्पादेप्यस्तीतिनपक्षताहानिःस्वक्षणेत्यत्रक्षणपदंसमयमात्रपरंक्षणत्वपर्यंतस्य
निष्फलत्वादितिभावः।लाघवादाह।स्वध्वंसेत्यादिस्वोत्तरप्रहाराद्युत्पन्नानुमितिकसिद्धिदशायांपक्षतावारणायसत्यंतदलं।सिद्धिद्वितीयक्ष
णस्यापिविषयितासंबंधेनसिद्धिध्वंसाधिकरणीभूतातीतज्ञानादेर्ध्वंसाकरणत्वात्।कालपदंस्वपूर्वप्रहाराद्युत्पन्नानुमितिकसिद्धिदशायांना
ह्रारणायस्वाधिकरणेत्यादिविशेष्यदलम्।कालपदोपादानात्कालिकसम्बन्धेनाधिकरणत्वलाभस्तेनसिद्धेःपूर्वप्रहारादेर्विषयितयासिद्ध्य
धिकरणीभूतस्यातीतज्ञानादेर्ध्वंसाधिकरणत्वेपिनोक्तदोषः।स्वाधिकरणत्वमात्रोक्तौसिद्धिप्राक्कालवारणसंभवेप्यनुमित्यंतरमनुमितेर्वा
रणार्थंस्वाधिकरणकालध्वंसाधिकरणत्वपर्यंतोपन्यासोऽन्यथाऽनुमित्यात्मकसिद्धेःस्वध्वंसाधिकरणकालध्वंसानधिकरणत्वेसतिस्वा
धिकरणीभूतोयःस्वोत्पादक्षणस्तदुत्पत्तिकानुमितिकत्वेनतद्भिन्नसिद्ध्यभावस्यसत्वादनुमित्यंतरापत्तिः।एवंस्वाधिकरणत्वमात्रस्यविशेष्य रामः
त्वेयत्रानुमित्सानाशक्षणेइत्याद्युक्तदोषनिरासोपिनस्यादितिध्येयं।नन्वेवंप्रागुक्तसिद्धिद्वयस्यद्वित्रिक्षणसाधारणनिरुक्तस्वक्षणाव्यवहि १८

तोत्तरक्षणोत्पत्तिकानुमितिकत्तयातदन्यसिद्ध्यभावस्वरूपायाः पक्षतायाः सहजनएवसत्वात्सिषाधयिषाविरहद्वयोपादानंव्यर्थमतआ
ह। तथाचेतिवारणायेतितत्रान्यसिद्धेः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वेपिसिषाधयिषाविरहविशिष्टोयः स्वक्षणाव्यवहितो
त्तरक्षणस्तदुत्पत्तिकानुमितिकसिद्ध्यंतरभिन्नतयाविरोधित्वादितिभावः स्वक्षणस्यविशेषणत्वेनदोषतादवस्थ्यादाह उत्तरक्षणेस्येतिअ
नुमित्युत्तरक्षणपर्य्यंतस्यापिस्थूलकालोपाधेरपिनिरुक्तस्याव्यवहितोत्तरकालत्वादेकानुमित्यनंतरमन्यानुमितेर्वारणार्थंद्वितीयक्षण
पदस्यावश्यकत्वादुत्तरकालस्येतिनोक्तं द्वितीयत्वेतिविशिष्टान्तमित्यनुषज्यनेसिद्धेरितिविशेषणमित्यनुषज्यते संपत्तयेइति अन्यथा
नुमित्साभूत्तस्याव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिद्धेः सत्वात्तृतीयक्षणेऽनुमितिर्नस्यादितिभावः नचैवं यत्रपरामर्शात्मक
सिद्धेरव्यवहितक्षणेतत्धर्मिकसाध्यवत्वांशेऽप्रामाण्यग्रहानंतरंचानुमितिः तत्रतादृशाप्रामाण्यग्रहोत्पत्तिक्षणेऽनुमित्यापत्तेः तत्रसिद्धि
व्यक्तेः सिषाधयिषाविरहविशिष्टोयः स्वक्षणाव्यवहितोत्तरक्षणः तदुत्पत्तिकत्वेनतदन्यसिद्धेः प्रागसत्वादितिवाच्यं अप्रामाण्यग्रहाभाव | कानुमि ६
विशिष्टस्ततत्सिद्धिव्यक्तित्वेनापिपक्षतावहिर्भावेणानुमितिविरोधित्वांतरस्यवक्तव्यत्वादितिभावः यद्यपि तृतीयक्षणसाधारणाव्यवहि
तोत्तरक्षणोत्पत्तिकानुमितिकभिन्नाभावस्यैवसम्यक्त्वात्सिद्धिपदंव्यर्थंपरामर्शहेतुभूतस्यव्याप्तिस्मरणादेर्निरुक्ताव्यवहितोत्तरक्षणोत्प
त्तिकानुमितितयैवाप्रतिबंधकत्वात् एवंचसिषाधयिषाविरहद्वयोपादानमप्यफलं यत्रक्रमेणसिद्धिसिषाधयिषानुमितयस्तत्रानुमित्सा
जनकस्यफलेच्छादेरेवस्याव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नस्यसत्वादनुमित्सोत्पत्तिक्षणेऽनुमित्यसंभवात् नचजातिध्वंसाद्यप्रसि
द्ध्यानिरुक्तस्याव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नस्यात्मत्वादेस्सत्वात्परामर्शमात्रादप्यनुमितिर्नस्यादतः सिद्धिपदमितिवाच्यमेतावता
नोत्तरत्वकल्पेस्याव्यवहि ४३

जा॰प॰ पिता दृशानुमितिकभिन्नसविषयकाभावस्यैव सम्यक्त्वे साध्यवत्त्वनिश्चयात्मिकायाः सिद्धेः प्रवेशानौचित्यात् तथापि स्वत्वस्याननुगतत्वात्ता
१९ दृशानुमितिकव्यक्तीनां तत्तद्व्यक्तित्वेन भेदानिवेश्यास्तत्र स्वपदेन सिद्धिव्यक्तय एव धर्तव्या ननु व्यक्त्यंतराणि नावच्छेदप्रवेशे गौरवात् तथा
त्स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकसिद्धिभिन्नस्य परामर्शादेः स्वत्वेऽप्यनुमितिर्न स्यादतः सिद्धिपदं न चैवं कार्य्योत्पाद*स्य कारणताव
च्छेदकाघटकत्वे नवा कार्य्योत्पादादिकं कारणतावच्छेदककोटौ निविशिनेइत्यग्रिमग्रंथस्यासंगतत्वापत्तिः तत्र अन्यादिपदेन स्वक्षणाव्य
वहितोत्तरक्षणोत्पत्तिकानुमितिकतत्तद्व्यक्तिप्रतियोगिकभेदकूटस्याप्युपग्रहात् तथा च क्रमिकसिद्धिसिषाधयिषानुमितिस्थले प्रथमक्षणे
पक्षतावारणार्थं विशिष्टांतस्योत्तरक्षणविशेषणत्वध्रौव्ये द्वितीयमपि विशिष्टांतं तत्रैव द्वितीयक्षणे पक्षतावारणार्थमावश्यकमित्यस्मद्गुरु
चरणाः यत्तु स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसविषयकाभावस्य पक्षतात्वे परामर्शादेरनुमितिहेतुता न स्यादित्येककारणप
रिशेषापत्तिभिया सिद्धिपदमिति तन्नेदं यत्र जागरणाद्यक्षणे स्मरणात्मकपरामर्शादनुमितिस्तत्र परामर्शोत्पत्तिदशायामेव तदापत्तिप्रसंगेन
परामर्शादेरनुमितिहेतुत्वस्यावश्यकत्वात् तत्रत्यपरामर्शपूर्ववर्तिनां निखिलसविषयकानां स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वेन
विरोधित्वादिति केचित् तन्न अपेक्षाबुद्ध्यात्मकपरामर्शे चतुर्थक्षणेऽनुमित्यर्थं सिद्धिपदमन्यथा तादृशपरामर्शस्यैव निरुक्तानुमितिकभिन्नसवि
षयकत्वेन प्रतिबंधकत्वापत्तिरित्याहुस्तन्नेदं चतुर्थक्षणे द्वित्वादिप्रत्यक्षस्यानुत्पादेन तादृशपरामर्शस्यापेक्षाबुद्धित्वे मानाभावात् अन्यथा
नुमित्युत्तरं सिद्ध्यात्मकस्यैवापेक्षाबुद्ध्यात्मकस्य चतुर्थक्षणे सिद्धिनिवेशेऽप्यनुमित्यभावप्रसंगात् ननु यत्र क्रमेण सिद्धिसिषाधयिषानुमित रामः
यस्तत्र प्रथमक्षणे पक्षतासत्त्वेऽपि च्छासामग्र्याः प्रतिबंधकत्वादेवानुमित्यनुत्पत्तिसंभवात् प्रथमविशिष्टांतदलं व्यर्थमत एव द्वितीयमपि न १९

* प्राथमिकद्वितीयक्षणसाधारणाव्यवहितोत्तरत्वकल्पे केचित्त्वित्यादिदोषः))

येन्यत आह यदि पुनरिति सर्वत्रेच्छाजनकीभूतज्ञानस्येच्छोत्पत्तिदशायां साक्षात्कारप्रसंगेन मानसत्वावच्छिन्नं प्रत्यक्षसामान्यं वा प्रती
च्छासामग्र्याः प्रतिबंधकत्वेप्यनुमितिं प्रति तस्यास्तथात्वे मानाभावात् न चेच्छासामग्रीदशायां स्मृतिशाब्दबोधाद्यनुदयाल्लाघवेन जन्य
ज्ञानत्वावच्छिन्नं प्रत्येव तस्याः प्रतिबंधकत्वमस्तु तत्त्वेऽनुमित्यसंभव इति वाच्यं सत्यामपीच्छासामग्र्यां पश्येयं स्पृशेयं शृणुयां शाब्दये
य मितीच्छादशायां जन्यज्ञानोत्पादेन चाक्षुषत्वस्पार्शत्वश्रावणत्वशाब्दत्वादिप्रकारकेच्छाविरहविशिष्टेच्छासामग्रीत्वेन चाक्षुषत्व
स्पार्शनत्वशाब्दत्वाऽऽदिप्रत्येकधर्मावच्छिन्नं प्रत्येव प्रति-- बंधकतयाऽनुमितिमंतर्भाव्येच्छासामग्र्याः प्रतिबंधकत्वाकल्पनात् जन्यज्ञान
त्वावच्छिन्नं प्रति तत्तदिच्छाविरहकूटविशिष्टेच्छासामग्रीत्वेन विरोधितायामिच्छासामग्रीसत्त्वेपि पश्येयमितीच्छातश्चाक्षुषस्येव स्पार्शनस्य
५ त्व शाब्दबोधादेर्वा प्रसंगात् जन्यज्ञानेऽस्याविशिष्टत्वात् तथा चानुमिताविच्छासामग्र्या इवेच्छायामप्यनुमितिसामग्र्या विरोधित्वं सुवचं च वि
निगमकाभावेनैकशेषस्य दुष्करत्वादित्याशयेन यदि चेत्युक्तं यत्त्वनुमितिसामग्र्यपेक्षयेच्छासामग्री लघुरिति सैवानुमितौ प्रतिबंधिका
नत्विच्छायामनुमितिसामग्री गुरुत्वादिति तत्तुच्छं तथा सत्यनुमित्साविरहविशिष्टाया एवेच्छासामग्र्या अनुमितिविरोधित्वं वाच्यमन्य।
थाऽनुमित्साकालीनायामपीच्छासामग्र्यामनुमित्यभावापत्तेः एवं चानुमित्साकालीनानुमितिसामग्रीदशायामिच्छानुत्पत्त्यर्थमिच्छा
सामान्यं प्रति त्वयाऽनुमित्साकालीनानुमितिसामग्रीत्वेनावश्यं विरोधित्वं वाच्यमिति सामग्र्या गुरुत्वस्याकिंचित्करत्वादिति ध्येयं यद्यपि सा
व्यवहितोत्तरक्षणोत्पत्तिकानुमितिकसिद्धिभिन्नसिद्ध्यभावस्यैव प्रक्रांतत्वात्तदुपादानमुचितं गौरवस्य वक्ष्यमाणलक्षणेपि समविशिष्टत्वात्त
थापि कार्योत्पादस्यैव कार्याव्यवहितपूर्वत्वस्यापि कारणतावच्छेदकत्वं निरसितुं तदंतर्भावेन पक्षतां निर्वक्ति अनुमित्यव्यवहितेति प्रकृ

तपक्षसाध्यकस्वसमानाधिकरणतत्तदनुमित्यव्यवहितपूर्ववर्त्तिसिद्धिभिन्नसिद्ध्यभावः प्रकृतसाध्यकानुमितौ पक्षतेत्यर्थः प्रकृतप
क्षसाध्यकानुमितिप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वघटितस्य सामान्यतस्तादृशानुमित्यव्यवहितपूर्वत्वस्याप्रसिद्धत्वा
त्तदिति नच प्रकृतपक्षसाध्यकानुमित्युत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगित्वरूपस्य सामान्यतस्तादृशानुमित्यव्यवहितपूर्वत्वस्य सुवचमि
ति वाच्यं तस्याप्युत्पत्त्यंतर्गतस्वत्वघटितत्वेन विशेषितो विश्राम इत्यं च स्वसमानाधिकरणतत्तदनुमित्यव्यवहितपूर्ववर्त्तित्वावच्छिन्न
भेदकूटस्य घटकतया तत्र स्वपूर्ववर्त्तिसिद्धिकालीनानुमितिव्यक्तीनां निवेशः कार्यो न तु सिद्धसमानकालीनानुमितिव्यक्तयोपि निवेश्याः।
प्रयोजनाभावाद्गौरवाच्चेत्यावेदयितुं प्रथमं सिद्धिपदं यत्तु प्रकृतपक्षसाध्यकस्वसमानाधिकरणानुमितिसामान्याव्यहितपूर्ववर्त्तित्वस्या
प्रसिद्ध्या तन्निवेशासंभवात् वस्तुगत्या तादृशानुमित्यव्यवहितपूर्ववर्त्ति यद्यत्स्वं तद्भेदकूटस्यैव निवेश्यतया तत्र च सिद्धिभिन्नस्य मनःसंयो
गादेः प्रतियोगिविधया प्रवेशे गौरवादतः सिद्धिपदमिति मतं तन्न तुच्छं तथा सति कार्याव्यवहितपूर्वत्वस्यानिविष्टतयाऽग्रे तत्तत्कारणतावच्छे
दकखंडनस्योन्मत्तप्रलपितत्वापत्तेः द्वितीयं तु सिद्धिपदं तादृशसिद्धिभिन्नस्य परामर्शमात्रस्य सत्त्वेप्यनुमितेरुत्पत्त्यर्थमन्यथा तस्यैव प्र
तिबंधकत्वापत्तेरिति भावः। प्रथमकल्पं दूषयति नादृश्येत्यादिना तद्व्यक्तित्वेनेत्यस्य सिषाधयिषाविरहविशिष्टेत्यादि तथा च सिषाधयिषा
विरहविशिष्टतत्तत्सिद्धित्वावच्छिन्नाभाव इत्यर्थः यथाश्रुते यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र सिषाधयिषाविरहविशिष्टो यः स क्षणाव्य
वहितोत्तरक्षणस्तदुत्पत्तिकानुमितिकभिन्नसिद्धेः सिषाधयिषादशायां सत्त्वात्तदनुमित्यनापत्तेः इत्थं च सकलसिद्धावित्याद्यग्रिमग्रंथोपि संगच्छ
त इति ध्येयं निरुक्तरूपेति सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकसिद्धिभिन्नसिषाधयिषाविरहविशिष्ट।

सिद्धिसत्त्वे नैवेत्यर्थः अनंतेति अवच्छेदकभेदेनैव कारणत्वस्य नानात्वादिति भावः न च तत्तत्सिद्ध्यभावकूटत्वेनैकरूपेणैव हेतुत्वमपेक्षा
बुद्धिविशेष्यत्वरूपस्य कूटत्वस्यापेक्षाबुद्धिव्यक्तीनां भेदेन नानात्वसंभवादिति भावः ननु प्रामाणिकानंत्यं न दोषायेत्यत आह । तादृशे
ति परामर्शदशायां यस्यां सिद्धौ नानुमित्सावैशिष्ट्यं तत्तत्सिद्धिमत्कावनुमित्साविरहविशेषणव्यर्थत्वादित्यर्थः परामर्शसमानकालीनसि
द्धिव्यक्तीनामभावस्य हेतुत्वे मानाभावाच्चेत्यपि द्रष्टव्यं ननु सर्वस्यां सिद्धौ न देयमेव तद्विशेषणमत आह तत्तत्समयेति सिद्ध्यधिकरणतत्त
त्क्षणे न समं सम्बन्धव्यक्तीनामित्यर्थः ननु तत्तत्समयसंबंधस्याविरोधित्वे सिद्धिमत इव पुरुषांतरस्याप्यनुमितिर्न स्यात्तादृशसंबंधस्यावि
शिष्टत्वादत आह तत्तत्समयावच्छिन्नेति सिद्धिकालीनतत्तन्मनोयोगव्यक्तीनां स्थिरत्वात्सिद्धिविगमेऽप्यनुमितिर्न स्यादतोऽवच्छिन्नांतं सिद्धि
मत इव जनांतरस्यापि तत्तत्समयावच्छिन्नमनोयोगसत्त्वात्तस्याप्यनुमितिर्न स्यादतस्तत्तदिति मनोयोगस्य विशेषणं मनोविशेषणत्वे तु तत्त
त्समयावच्छिन्नतन्मनः प्रतियोगिकसंयोगस्यापि पुरुषांतरे संभवात् सिद्धिमत इव तस्याप्यनुमित्यनापत्तेरिति भावः न च तत्तत्सिद्धित्वेन प्र
तिबंधकत्वमपेक्ष्य तत्तत्समयावच्छिन्नतन्मनोयोगत्वेन प्रतिबंधकत्वं गौरवादेव परित्यज्यमिति वाच्यं त्वया सकलसिद्ध्यनुमित्साविरह
वैशिष्ट्यस्यैवं मयापि सर्वस्मिन्मनोयोगे तत्तत्समयावच्छिन्नत्वस्यानुपादेयतयोभयत्रापि दूषणसमाधानयोस्साम्यादिति भावः कस्याश्चि
न्नेति सिद्धेरनंतरमनुमितिरित्यनुपज्यते नियामकाभावादिति नियामकालाभादित्यर्थः विशिष्टाभावस्य विशेष्याद्यभावरूपतया निरुक्ताभाव
स्य विशेष्यीभूतसिषाधयिषाविरहविशिष्टसिद्धेरभावस्वरूपत्वेन तादृशसिद्धिसत्त्वे कदाप्यनुमितिर्न स्यात्तत्क्षणाव्यवहितोत्तरक्षणोत्पत्तिकानु
मितिकभिन्नत्वरूपविशेषणाभावरूपत्वे विवक्षितविवेकेनानुमित्युत्पादस्यैवानुमित्युत्पादप्रयोजकत्वे पर्यवसानादात्माश्रयादिति भावः न

त ५

सत्वा ८



नुमणिकारमते विशिष्टाभावस्यातिरिक्ततया तस्य सत्त्वमेवानुमितेरुत्पादानुत्पादनियामकं वाच्यमत आह नवेति कारणसमाजाधीनं तत्तद्ध
र्मावच्छिन्नकार्यस्योत्पादादिकं तत्तद्धर्मावच्छिन्ने कार्ये स्वकारणतावच्छेदककोटौ न निविशते गुरुधर्मेणैवनाद्रूप्येणापि जनकतायाम
न्यथासिद्धत्वादित्यर्थः तेन ज्ञानोत्पत्त्यादिविशिष्टबुद्धौ ज्ञानोत्पत्त्यादिज्ञानत्वेन हेतुतायां कार्योत्पत्तेरवच्छेदकत्वेऽपि ज्ञानोत्पत्तिविशिष्ट
बुद्ध्युत्पत्तित्वेनाप्रवेशान्न दोषः आदिपदात्कार्याव्यवहितपूर्वत्वादेः स्वक्षणाव्यवहितोत्तरक्षणानुत्पन्नकार्यान्यत्वस्य च परिग्रहः कार्यो
त्पादादिघटितधर्मेण हेतुत्वे प्रतिबंधिमाह तथासतीति स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिर्यस्य तादृशसवि
षयकत्वेनेत्यर्थः कारणत्वं स्यादित्यग्रेणान्वयः स्वक्षणाव्यवहितोत्तरतादृशानुमितिकस्य परामर्शस्यैव सत्वादनुमित्युत्तरमनुमितेर्वार
णाय उत्पत्तिकालावच्छिन्नेति स्वोत्पत्तिक्षणावच्छिन्नेति तदर्थः । उत्पत्त्यवच्छिन्नस्य घटादिज्ञानस्योत्तरमप्यनुमितिः स्यादतः स्वक्षणाव्यव
हितोत्तरक्षणोत्पत्तिकेति स्वक्षणेत्यत्र क्षणः समयमात्रं न तु क्षणमात्रं वैयर्थ्यात् अनुमितेरपि स्वसमयाव्यवहितोत्तरीभूतस्वस्थितिक्षण
पर्यंतस्थायिप्रहारादुत्पत्तिकानुमितिकतया ततोऽप्यनुमित्यंतरापत्तिरतो द्वितीयं क्षणपदमनुमितेरपि स्वक्षणाव्यवहितोत्तरक्षणवृत्तित्व
त्मकानुमितिकत्वात्तदुत्तरमनुमित्यंतरस्य वारणाय उत्पत्तिपदं न च स्वक्षणाव्यवहितोत्तरक्षणवृत्तित्वेतरानुमितिकत्वमेव तदर्थ उच्यतामिति
वाच्यं यत्र साध्यानुमितिद्वयं जायतामितीच्छया साध्यतद्व्याप्ययोरपेक्षाबुद्ध्यात्मकानुमित्युत्तरं साध्यमात्रस्यानुमितिस्तत्र साध्यस्यानुमित्यंतर
प्रसंगात् पूर्वानुमितेः त्रिक्षणस्थायित्वात्तत्रोत्पत्तिः आद्यक्षणसंबंधः आद्यक्षणसंबंधत्वं च स्वाधिकरणसमयध्वंसानाधिकरणत्वमात्रं न तु
स्वाधिकरणत्वमपि प्रवेश्यं वैयर्थ्यादिति द्रष्टव्यं स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिपुरुषान्तरानुमितिकादृघटादिज्ञानादनुमितेर्वारणाय स्वस

मानाधिकरणेति एकपुंसि तादृशानुमितिकस्य हि त्वस्य पुरुषांतरेपि सत्वात्तत्रानुमितेर्वारणाय स्वविषयकेति सिद्ध्यात्मकपरामर्शोनु
मित्यानुमितीनां क्रमिकस्थलेनादृशज्ञानासंभवात् ज्ञानत्वापेक्षया गुर्वपि सविषयकत्वं निवेशितं न चैतस्य स्वत्वद्वयघटितत्वादुक्तरूपेण
हेतुतायां गौरवमिति वाच्यं स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिसामानाधिकरण्ये तात्पर्य्यादिति भावः कार्य्योत्पादस्य कारणतावच्छेद
कत्वप्रतिवंधिमुक्ता कार्य्याव्यवहितपूर्वत्वस्य तथात्वे प्रतिबंधिमाह स्वसमानेत्यादि अत्र तादृशानुमित्यव्यवहितपूर्वत्वं न तादृशानुमितिप्रा स.४
गभावाधिकरणसमयप्रागभावानधिकरणत्वे सति तादृशानुमितिप्रागभावाधिकरणत्वरूपमप्रसिद्धत्वात् किंतु तादृशानुमितिक्षणोत्पन्न
ध्वंसप्रतियोगित्वं तथाच सिद्धिमात्रादनुमित्यापत्तेस्तस्यापि समानाधिकरणानुमित्युत्पत्तिक्षणोत्पन्नध्वंसप्रतियोगि प्रहरादिकालोत्पन्न
त्वादतः क्षणपदं यत्र परामर्शेन स्वनाशक्षणेऽनुमितिर्जन्यते तत्र द्वितीयक्षणेप्यनुमित्यापत्तिः परामर्शस्यैव स्वसमानाधिकरणानुमित्य स्व
व्यवहितप्राक्क्षणावृत्ते रुत्पत्त्यवच्छिन्नस्य सत्त्वादुक्तमुत्पन्नेति न च स्वत्वस्याननुगतत्वादुक्तरूपेण हेतुत्वमसंभवीति वाच्यं यत्नत्वादेरि
व स्वत्वस्याप्यनुगतत्वमंगीकृत्यैव दूषणोपक्रमात् अन्यथा तद्व्यक्तित्वेन स्वपदार्थस्य प्रवेशे कार्योत्पादादेर्गुरुत्वादेव कारणतायामप्रवेश
संभवेनान्यथासिद्धिमद्भयात्तदीयावच्छेदकत्वखंडनस्योन्मत्तप्रलपितत्वापत्तेरिति भावः आदिपदलभ्यस्य स्वक्षणाव्यवहितोत्तरक्षणानु
त्पन्नकार्यकारणतावच्छेदकत्वप्रवेशबाधकमाह। स्वक्षणेत्यादि स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिर्येषां
तदन्यसविषयकत्वेनेत्यर्थः अत्राप्युत्पत्त्यवच्छिन्नत्वविशेषणं प्रवेशनीयमिति नातिप्रसंगः केचित्तु प्रागुक्तस्योत्पत्तिघटकस्वत्वघटितत्वे
नानुगतत्वाभावादुक्तं स्वक्षणेत्यादि न चैकानुमित्युत्तरमनुमित्यंतरस्य वारणार्थमस्यापि स्वोत्पत्तिकालावच्छिन्नत्वेन विशेषणीयत्वादनु न१

जा॰प॰ गमतादवस्थं स्वोत्पत्तिकालावच्छिन्नत्वेन स्वानुत्पत्तिक्षणावच्छेद्यत्वाभावकूटवत्त्वस्य विवक्षितत्वादित्याहुः ननूक्तं अनुगतस्वत्वम-
२२ गीकृत्यैव दोषोपक्रमात् अन्यथा कार्योत्पत्त्याद्युपलक्षितायास्तद्व्यक्तेरेव कारणतावच्छेदकत्वे कार्योत्पादादेरवच्छेदकत्वखंडन-
स्यासंगतत्वापत्तेः पश्चाद्वक्ष्यमाणस्यापि स्वत्वगर्भत्वेन संदर्भविरोधापत्तेश्चेति दिक् ननु सविषयमात्रस्यैव प्रायशः स्वक्षणाव्यवहितोत्त- क
रक्षणानुत्पत्तिकस्वसमानाधिकरणयत्किंचिदनुमितिव्यक्तिकतया तदन्यसविषयकस्य संसारिण्यभावात् परामर्शमात्रादप्यनुमिति-
स्यात् तादृशक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिसामान्यकभिन्नसविषयत्वेन कारणत्वे महागौरवमत आह किं वेति यन्नूक्तरूपेण
हेतुतायामनुमितिसामान्योपधायकत्वं परामर्शस्य न स्यादिति यस्य यदवस्थपरामर्शानुमितिस्थले कथितरूपावच्छिन्नस्य तस्यासत्त्वादत आ-
न ह किं वेत्यादिकमिति ननु स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयकत्वेन हेतुत्वोक्त्या पूर्वमेव परामर्शस्या-
नुमित्युपधायकतानियमस्योक्तत्वात्तदसंगतत्वे संदर्भविरोधापत्तेः अत्रानुमितिपूर्ववर्तिनो ज्ञानस्यानुमितिदशायामपि सत्त्वादुत्तरकाल-
मनुमितेर्वारणाय तादृशपूर्ववर्तित्वविशिष्टेत्युक्तं नथा च तदवच्छिन्नस्य प्रागसत्त्वान्न दोषः ज्ञानत्वादिनेत्यादिना सविषयत्वभावनात्वादेः क
परिग्रहः ननु प्रथमकल्पे तृतीयक्षणसाधारणस्य प्राग्युक्ताव्यवहितोत्तरत्वस्य प्रवेशे व्याप्तिज्ञानमात्रादनुमितिः स्यात्तस्यापि परामर्शसंपत्त्या स्वा-
व्यवहिततृतीयक्षणोत्पत्तिकानुमितिकत्वात् तत आह स्वाव्यवहितोत्तरश्चेति तथा च स्वाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरण-
त्वगर्भमेवाव्यवहितोत्तरत्वं निवेश्यमिति भावः न चेति वाच्यमित्यन्वयः पूर्वोत्पन्नस्यैव परामर्शस्य स्थितिक्षणेऽनुमित्यव्यवहितपूर्वत्वविशि- राम:
ष्टस्यासंभवात् किं वेत्यादिकल्पे दोषासंभवादादिमेषु त्रिष्वित्युक्तं अतथात्वादिति स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वाभावात् २२

स्वसमानाधिकरणाव्यवहितपूर्वक्षणोत्पन्नत्वाभावात् स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकभिन्नसविषयक
त्वाभावाच्चेत्यर्थः तदानीं विरोधिसिद्ध्यादेर्नाशदशायाम् अनुव्यवसायादेरित्यस्य पंचम्यन्तस्यसंभवादित्यनेनयोजना अनुव्यवसायादि
नोनुमितिसंभवादित्यर्थः आदिनावाद्यप्रत्यक्षांतराद्युपसंग्रहः ननु यत्र परामर्शविषयिण्याकामिनी जिज्ञासयापरामर्शमात्रमुत्पाद्यत
ष्टंतत्रपरामर्शोत्तरक्षणेतयाप्रतिबंधात् ज्ञानमात्रस्यैवानुत्पत्त्यापश्चादनुमितिर्नस्यादतआह अंततःसंस्कारेति अंततोजीवनयोनि
क्तेरसत्त्वेनचयत्रसर्वांशएवोपेक्षात्मकउक्तपरामर्शस्तत्रसंस्कारस्यासंभवस्तादृशस्थलेमानाभावात् अनुमित्यात्मककार्येणानुमि
तसंस्कारस्यान्यथानुपपत्त्यानुपेक्षात्मकस्यैवतत्रकल्पनात् इतोप्यस्वरसमाह किंवेत्यादिकल्पस्यादनन्त्वादितिभावः ननुनादृशानुमि
तेःसंस्कारजन्यत्वेस्मृतित्वापत्तिरतआह संस्कारजन्येति जन्यत्वंसमवायेनग्राह्यंनातःसंस्कारध्वंसेव्यभिचारःप्रागेवमुक्तेःसुतरामर्थेनि
पातिनःनिरासादितिप्रत्यभिज्ञायांव्यभिचारादप्रयोजकत्वाच्चसंस्काजन्यत्वेस्मृतित्वानियमादितिभावःननूक्तप्रतिबंधिभयाद्भावनिष्ठ।
कारणतायाअवच्छेदकविधयाकार्योत्पादादिकमनिवेश्यतामभावरूपायाःपक्षतायाःकारणतायांतन्निवेशेनकिंचिदपिबाधकमतस्त
त्रापिप्रतिबंधिमाह स्यादेति तथासतीत्यनुषज्यते ज्ञानमात्रस्यैवप्रायशोव्यधिकरणानुमित्यव्यवहितपूर्ववृत्तित्वात्तदन्यस्यप्रलयादेरभा
वःपरामर्शविधुरेप्यात्मन्यस्तीति तत्रानुमितेर्वारणायस्वसमानाधिकरणांतं अनुमितिश्चपक्षसाध्यादिविशेषनियंत्रिताग्राह्या तेनैकसा।
ध्यानुमितिदशायांसिद्ध्यादिसत्त्वेपिनान्यसाध्यकानुमितेरुत्पादः तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वलक्षणास्यवक्ष्यमाणाव्यवहितपू
र्वत्वस्यानुमितिस्थूलकालेपिसत्त्वात्तद्वृत्तिसिद्धिसत्त्वेप्यनुमित्यापत्तेरतः क्षणेति — ननुयत्रसामग्रीवशात् साध्यतद्व्याप्ययोरनुमित्यात्मकपराम

जा॰प॰ शेः ततः साध्यस्यानुमित्यंतरं जायतामितीच्छातो ततोऽनुमित्यंतरं तत्रानुमित्याकालेप्यनुमित्यापत्तिः पूर्वोत्पन्नानां सर्वेषामेव तदात्मगुणानां
२३ तादृशानुमित्यव्यवहितपूर्वक्षणवर्त्तित्वेनाविरोधित्वादत आह स्वसमानेति तथाचोक्तस्थले प्रथमानुमितिक्षणस्यैव तादृशाव्यवहितपू
र्वत्वानधिकरणतया तद्वृत्तित्वविशिष्टस्य परामर्शादेरेव विरोधिनः सत्वान्न दोष इति भावः अनुमित्युत्पत्तिपर्य्यंतस्थायिस्थूलकालोपाधेर
पि तादृशानुमित्यव्यवहितपूर्वत्वानधिकरणतया तद्वृत्तित्वविशिष्टस्य परामर्शमात्रस्य सत्वेप्यनुमितिर्न स्यादतः क्षणपदं ननु तादृशानु
क मित्यव्यवहितपूर्वत्वं तादृशानुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वरूपमेवाग्रे वक्ष्यते ननु तादृशानुमित्युत्पत्तिकालोत्पत्तिकध्वंसप्र
तियोगित्वरूपं तथा सति सर्वेषामेव क्षणानां तादृशानुमित्युत्पत्त्यधिकरणीभूतस्थूलकालोत्पन्नध्वंसप्रतियोगितया निरुक्ताव्यवहितपू
र्वत्वानधिकरणत्वस्यैव दुर्लभत्वापत्तेरेवं च तादृशानुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वानधिकरणक्षणवृत्तित्वविशिष्टत्वेन प्रति
बंधकत्वमपेक्ष्य तादृशानुमित्युत्पत्त्यनधिकरणसमयोत्पत्तिकध्वंसप्रतियोगिक्षणवृत्तित्वविशिष्टत्वेन विरोधित्वं युक्तं क्षणद्वयाप्रवेशेन पू
र्वतो लाघवादित्याशयेनाह स्वसमानेति अत्र तादृशसमयाव्यवहितपूर्वत्वं तादृशसमयोत्पत्तिकध्वंसप्रतियोगित्वमात्रं ननु तादृशसमयो
त्पत्तिकालोत्पत्तिकध्वंसप्रतियोगित्वमाद्योत्पत्तेर्वैयर्थ्यान्निष्फलत्वाच्च समयपदं तत्व्यवहितघटकोत्पत्तेः कालिकसंबंधेन वृत्तित्वलाभार्थ
मन्यथानुमितिपूर्वक्षणस्यापि तादृशानुमित्युत्पत्त्यनधिकरणबुद्ध्यादौ विषयित्वादिसंबंधेन वर्त्तमानोत्पत्तिको यो ध्वंसस्तत्प्रतियोगित्वेन त
त्क्षणवृत्तित्वविशिष्टस्य परामर्शादेः प्रतिबंधकतया स्वकालेप्यनुमित्यनापत्तेरिति ध्येयं नन्वनुमित्यव्यवहितपूर्वत्वं तदुत्पत्तिकालोत्पत्तिक रामः
ध्वंसप्रतियोगित्वं तथा चातिपूर्वक्षणस्यापि अनुमित्युत्पत्त्यधिकरस्थूलकालोत्पत्तिकध्वंसप्रतियोगित्वात्तद्वृत्तित्वस्यापि सिद्ध्यादेरप्रति २३

अ प २ तो १

बंधकत्वापत्तिरतआह नत्वव्यवहितेति तादृशानुमित्यव्यवहितपूर्वत्वंचेत्यर्थः शेषकल्पे निरुक्ताव्यवहितपूर्वत्वस्याप्रविष्टतया सामान्य
तोऽव्यवहितपूर्वत्वस्य निरूपणानौचित्यादिति ध्येयम् नच जन्याभावत्वलक्षणध्वंसत्वस्य प्रवेशे वैयर्थ्यमभावान्तराणामुत्पत्तिविरहेणा
वनिरसादिति वाच्यं ध्वंसत्वनिरूपकप्रतियोगित्वलाभार्थं तदुपादानात् अन्यथा सर्वेषामेव क्षणानामनुमित्युत्पत्तिकालोत्पत्तिकस्वभेद
त्मकध्वंसांनरपतियोगितयातिप्रसंगापत्तेः ध्वंसत्वस्याखंडत्वमते वैयर्थ्याशंकानुत्थानाच्चेति भावः नचेति वाच्यमित्यन्वयः अत्रउक्तेउ
भयेप्रथम इति अन्ययोरुक्तकल्पयोस्तादृशानुमित्यव्यवहितपूर्वत्वानधिकरणक्षणवृत्तित्वविशिष्टेन स्वसमानाधिकरणानुमित्युत्पत्त्य
नधिकरणसमयाव्यवहितपूर्वक्षणवृत्तित्वविशिष्टेन च परामर्शेनैव प्रतिबंधादनुमित्सोत्पादकालेऽनुमितेर्नसंभव इति भावः सिद्धिसत्वेऽ
नुमित्सामवधूयानुमितिरेवोत्पद्यते परामर्शपूर्वं सिद्धिसत्वे च सैव तादृशाव्यवहितपूर्ववर्त्तिभिन्नविरोधिनी भविताइत्यतः सिद्धान्तमतेतु।
कप्रतिक्षणमवश्यं कस्यचिद्विनाशोपगमात् तत्पुरुषीयस्येत्युक्तं तदुत्पादसमयेऽनुमित्सोत्पादसमयेसाऽनुमितिः तादृशपूर्ववर्त्तित्वेन स
मानाधिकरणानुमित्यव्यवहितपूर्वक्षणवर्तित्वेन यद्यप्यनुमित्साया अप्युपायेच्छात्वात्तत्कारणीभूतफलेच्छाया एवानुमितिप्रागवृत्तिभि
न्नायाः सत्वादनुमित्सोत्पत्तिकालेऽनुमितेरसंभवः तथापि सुखात्मिकानुमितिर्जायतामित्याकारिकैवात्र सिषाधयिषा बोध्या सा च फलेच्छा
न्तरमवेक्ष्यते इत्यदोषः परामर्शोऽप्यत्र स्मरणात्मको ग्राह्यः अन्यथा विशिष्टानुभवत्वेनैव तदर्थमपेक्षणीयस्य विशेषणज्ञानादेस्तादृशपूर्ववर्त्तिभि
न्नत्वेन विरोधित्वसंभवात् नच स्मरणात्मकपरामर्शहेतोः संस्कारस्यैव फलनाश्यस्य तादृशपूर्ववर्त्तिभिन्नत्वसंभवः समूहालंबनसंस्कारजन्य
परामर्शस्य चरमफलत्वाभावेन संस्कारनाशकत्वादिति वदंति यत्तु सिद्ध्यात्मकपरामर्शोऽत्रानुमितिरूप एव ग्राह्यस्तथा च फलेच्छादेरपि स्व
त्वादेव न फलेच्छा ४

उा॰प॰ समानाधिकरणानुमित्यव्यवहितपूर्ववर्त्तित्वादेव प्रतिबंधकत्वासंभवादत एव च पुनरनुमितिरित्यत्र पुनःपदेन सिद्ध्यात्मकपरामर्श
२४ स्यानुमितित्वं ग्रंथकृतैव व्यंजितं नच सिद्ध्यात्मकानुमितिसत्त्वेऽनुमित्सैव दुर्घटानुमित्यनन्तरत्वप्रकारेण तत्संभवादिति मतं तन्नानुच्छं अनव
रतेत्युत्तरग्रन्थासंगतेः क्षणिकपदार्थानभ्युपगमेन संयोगादीनामपि तादृशपूर्ववृत्तित्वेन प्रतिबन्धकत्वायोगादिति यद्यपि स्वावच्छिन्न
समानाधिकरणानुमित्यव्यवहितपूर्ववर्त्तितानवच्छेदकं धर्मविशिष्टत्वेन प्रतिबंधकत्वविवक्षयाप्युक्तसिषाधयिषोत्पत्तिकालेऽनुमितेर्वार
णं संभवतीति स्वोत्पत्तिक्षणावच्छिन्नतत्सिद्धिव्यक्तित्वस्यैव तादृशपूर्ववर्त्तितानवच्छेदकतया तद्विशिष्टायाः सिद्धेः अनुमित्सापूर्वसत्त्वा
त् तथापि यथाश्रुतमेव समाधिसौकर्यादाह अनवरतेति ——— अनवरतम् अनुक्षणम् परिस्पंदमानाये परिमिताः पवनादिपर
न माणवस्तैः सार्द्धं यः चेतनसंयोगसंतानैस्तदन्तर्गतसंयोगव्यक्तीनामनुक्षणमेव नाशादित्यर्थः तथा च परामर्शपर्यंतस्थायित्यः परमाणुतन
त्संयोगव्यक्तयस्तत्रानुमितिं प्रतिबंधिका इति भावः ननु तत्र कारणाभावप्रयुक्तः फलानुत्पादः कारणान्तरमेवास्ति पेदित्यत आह कारणान्तरेति
नुकक्रमेण कारणतानिश्चये सति तादृशसंयोगो परमः कल्पनीयः कारणतानिश्चय एव तु तत्प्राक्वर्त्तिनां न संभवत्यन्वयव्यभिचारसंदेहेन प्र
तिबंधादत आह अन्वयेति संदेहस्येति प्रकृतानभिप्रायेणाविरोधित्वादिति ग्राह्याभावानवगाहित्वादिति भावः ननु यत्र पक्षः साध्यव्याप्यवान्
साध्यानुमित्यंतरं चेष्टसाधनमित्याकारकानुमितेः पश्चात्साध्यानुमित्सा ततः साध्यानुमित्यंतरं तत्रानुमित्साकालेऽनुत्पादेनान्वयव्यभिचा
रनिश्चयात्कारणान्तरमवश्यं कल्पनीयं क्षणिकपदार्थानभ्युपगमादनुमित्सापूर्ववर्त्तिनां सर्वेषामेव समानाधिकरणप्रथमानुमित्यव्यवहि राम॰
तप्राक्क्षणवृत्तित्वेन तद्भिन्नत्वाभावादित्यस्वरसादाह उपादेयतामिति प्रतिबंधकतयेति शेषः तथा च प्रथमानुमित्युत्पत्तिक्षणसंबंधादेव। २४

साध्यवान्४

अनुमित्यव्यवहितपूर्वक्षणवर्त्तित्वभिन्नत्वेनानुमितिप्रतिबंधका इति भावः ननु तादात्म्यसमयसंबंधानामतिरिक्तत्वमते नेदं तु न स्यादित्याद्युक्त
प्रकारत्रयमपि सत्त्वगर्भत्वादननुगतमतस्तादृग्रूपेण प्रतिबंधकतायामनेककारणपरिशेषापत्तिरत आह भवेति अत्र च तत्पुरुषीयानुमि
त्यव्यवहितपूर्वक्षणत्वं स्वप्रागभाववृत्तिविशिष्टकालिकसंबन्धेन तादृशानुमित्याश्रयशब्दत्वं वाच्यमतो नानुगमाद्यनवकाशः न च तादृश
शब्दस्यानुमितिक्षणेपि सत्त्वात् पुनरनुमित्यापत्तिः कार्यसहभावेनैव तस्य हेतुत्वात्तादृशशब्दविशिष्टत्वं वा वक्तव्यं वैशिष्ट्यं च स्ववृत्तित्व
स्ववृत्तिध्वंसप्रतियोगित्वोभयसंबंधेन ग्राह्यं शब्दस्य चतुःक्षणस्थायित्वमतेनेदमपहाय सुखदुःखादीनां द्विक्षणस्थायिगुणानामन्यतम
न्येव निवेशनीयमित्यभिनवः पंथाः पूर्वक्षणत्वादिनेत्यादिना तादृशपूर्वत्वानधिकरणक्षणाभावत्वादेरुपग्रहः परामर्शादेः कारणत्वरक्षा
मनुसृत्याह तादृशेति अत्र न तत्पुरुषीयानुमितिं प्रति न तत्पुरुषीयानुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वेन हेतुतायां कालिकमेव व्यापक
त्वं प्रविष्टमतः पुरुषान्तरे तत्पुरुषीयानुमितिर्नापादनीया विशिष्टत्वादिनेत्यादिपदेन तादृशपूर्वत्वानधिकरणवृत्तित्वविशिष्टाभाववत्त्वादेः परिग्रह
ननूक्तरूपेण कारणतायामिष्टापत्तौ को दोष इत्यत आह तथा चेति उपमानादेरित्यादिना शब्दस्य परिग्रहः सर्वत्रेति उक्तक्रमेणेत्यादिव्या
स्याच्च प्रतिसंधानदशायामुत्पन्नयोरुपमितिशाब्दयोः कारणबाधेनानुमितित्वासंभवादेव तत्कारणयोरुपमानशब्दयोः प्रमाणान्तरत्वा
सिध्यते प्रागुक्तरूपैरनुमितिहेतुत्वे कारणबाधासंभवात्तयोरप्यनुमान एवान्तर्भावः ननु यत्रोपमित्यादिस्थले नानुमिनोमि किं तूपमिनोमीत्या
दिरेवानुव्यवसायस्तत्रैवोपमित्यव्यवहितपूर्वक्षणस्यानुमित्यव्यवहितपूर्वत्वाभावात्कथं सर्वत्रोक्तानुमितिसामग्री अन्यथोपमित्यादिकं न्न
प्रत्युपमित्यव्यवहितपूर्वक्षणत्वादिना हेतुत्वकल्पनात्सर्वत्रैवोपमितिसामग्रीसंभवादनुमानस्य प्रमाणान्तरत्वं भग्नमित्येव किं तु रोचये।

जा॰प॰ दित्यत आह विलीयेति चेति परामर्शत्वादिनेति व्याप्यपक्षोभयवैशिष्ट्यावगाहिनिश्चयत्वेन व्याप्यवत्पक्षनिश्चयत्वेन वानुमितौ हेतु
२५ त्वं न स्यादित्यर्थः प्रागुक्तस्वविषयकत्वादिनैव परामर्शस्य तथात्वनिर्वाहादिति भावः बाधत्वादिनेत्यादिपदेन सत्प्रतिपक्षोपसंग्रहः प्राग
काव्यहितपूर्ववर्त्तिभिन्नत्वेनैव बाधादेः प्रतिबंधकत्वसंभवादिति भावः न च बाधादेर्विशिष्टबुद्धिसामान्यं प्रत्येव विरोधित्वादनुमितित्वा
वच्छिन्नं प्रति बाधत्वादिना ———— प्रतिबंधकत्वं प्रसक्तमेव नेति वाच्यं सति बाधे विशिष्टबोधेच्छायां साक्षात्कारिण्याहार्यानुमित्या
दिरूपाया अपि विशिष्टबुद्धेरुत्पत्तिभियानुमितित्वावच्छिन्नं प्रत्येव बाधत्वादिना पृथक् विरोधित्वस्यावश्यकत्वादिति भावः कार्यांतरेषु
शाब्दबोधदाहादिषु अतथात्वम कारणत्वमप्रतिबंधकत्वं च प्रसज्यत इत्यन्वयः एवं तथात्वमित्यत्रापि तथा च शाब्दबोधत्वावच्छिन्नं प्र
७ स ति स्वसमानाधिकरणशाब्दाव्यवहितप्राक्क्षणोत्पन्नविषयकत्वेन हेतुत्वे विनश्यदवस्थस्य पदार्थोपस्थित्यादेः शाब्दधीहेतुत्वं न स्यात्
प्रत्युत शाब्दधीप्राक्क्षणोत्पन्नसंस्कारादेरपि न तद्धेतुता स्यात् एवं स्वसमानाधिकरणदाहाव्यवहितप्राक्क्षणवृत्तिभिन्नत्वेनैव मण्यप्र
धादेर्दाहे प्रतिबंधकत्वे कदाचिदुपहितदाहानां मण्यादीनां दाहप्रतिबंधकत्वं न स्यात् प्रत्युत तादृक्पर्णोदासीनस्यापि घटादेर्दाहविरोधित्वं
स्यादित्यर्थः अत एव कार्याव्यवहितपूर्वत्वादेः कारणतानवच्छेदकत्वादेव द्वितीयपक्ष इति ना तादृशानुमित्यव्यवहितपूर्ववर्त्तिसिद्धिभिन्नसि
भाव द्धिमात्रं पक्षतेति ग्रंथोक्तकल्प इत्यर्थः द्वितीयप्रकारे दोषांतरमप्याह वैयर्थ्याच्चेति स्वसमानाधिकरणतत्तदनुमित्यव्यवहितपूर्ववर्त्तित्व
विशिष्टप्रतियोगिकभेदकूटस्य प्रवेशे गौरवात् स्वप्रागभाववन्निष्ठस्वसामानाधिकरण्यसंबंधेन प्रकृतसाध्यकानुमितिविशिष्टत्व[illegible]लक्ष राम:
णमेव तादृशानुमित्यव्यवहितपूर्ववर्त्तित्वं द्वितीयप्रकारे लाघवान्निवेश्यं तथा च तदवच्छिन्नभिन्नसिद्ध्यभावस्यैव सम्यक्त्वेन प्रथमं सिद्धि २५

पदं विफलमखंडाभावघटकत्वेपितादृप्येण हेतुतायांगौरवादितिभावः पक्षपातेमतंदर्शयतिसिषाधयिषाइत्यादिकेवलपरामर्शसत्वे
प्यनुमितिर्नस्यात् तस्यैवानुमित्साविरहविशिष्टसाधकमानस्यसत्वात् नोऽनुमानातिरिक्तं पदंम अत्रप्रत्यक्षमानमेवनिवेशयितुंयुक्तंन
त्वनुमितिभिन्नसिद्धिजनकमानंसमानविषयेपशाब्दादिसामग्रीसंभवेऽनुमितेरेवोत्पादात् तत्रएवएकपदार्थस्यापरपदार्थसंसर्गव्याप्य
धर्मवत्वस्ययोग्यतात्वेसंसर्गस्यानुमितिरेवस्यात् नतुशाब्दधीरितियोग्यताग्रंथेमणिकारैरप्युक्तमितिवदंति अन्यतरस्येतिइत्थंचसा
धकंसिद्धिमानंचसिद्ध्यात्मकमितिजनकप्रमाणमित्युभयमेवमूलस्यसाधकमानशब्दस्यार्थइतिभावः उपहितमितितयासिद्ध्याउपहितंविशि
ष्टंपक्षतावच्छेदकसामानाधिकरण्येनसिद्धिविशिष्टत्वंतादृशसिद्धिजनकमितियावत् तत्सामग्री अनुमित्यन्यसिद्धेःसामग्रीचक्षुरादि
देन७ न्यादिनोप ज्ञादेरूपग्रहः नतुसिद्ध्यनुपधानदशायांसिद्धिजनकस्यप्रत्यक्षसामग्र्यादेःपृथगेवानुमितिविरोधित्वंवाच्यंसत्जन्यैकसिद्ध्यु
४ना७ पहितप्रत्यक्षसामग्र्यासिद्ध्यंतरजननदशायामनुमितेर्वारणार्थमेवनिरुक्तसाधकमानस्यपक्षतायांप्रवेश्यत्वात् तत्राह अनुमानेति
वैयर्थ्यमितिसाधकमानस्यपरामर्शादेरनुमितेःपूर्वंनष्टेःशिष्ट्याभावादेवविरोधित्वासंभवादितिभावः। अनुमितिभिन्नसिद्धिप्राक्क्षणाव
च्छिन्नत्वमेवतादृशसिद्ध्युपहितत्वमित्युक्तौनातिप्रसंगः नवावैयर्थ्यमितिध्येयम् अनुमितिसामग्र्यभाववत्वेनेत्यादि अन्यथावह्न्यादेःस
न्निकर्षदशायामनुमित्सयाप्यनुमितिर्नस्यादितिभावः। प्रत्यक्षसामग्र्यभाववत्वेनेति अन्यथासमानविषयेसत्यामपिप्रत्यक्षसामग्र्यामनु
मित्युत्पादप्रसंगादितिभावः अन्योन्याश्रयादिति अनुमितिसामग्र्यभाववत्वेनप्रत्यक्षहेतुताग्रहोत्तरमेवप्रत्यक्षसामग्रीमवगम्यतदभाव
त्वेनानुमितिहेतुत्वंग्राह्यमनुमितिसामग्रीज्ञानंचानुमितिंप्रतिप्रत्यक्षसामग्र्यभाववत्वेनहेतुताग्रहंविनानेत्यन्योन्याश्रयादुक्तरूपेणकार्य

जा॰ प॰ कारणाभावग्रहासंभवादित्यर्थः अथानुमितिसामग्र्यभावातिरिक्तं प्रत्यक्षहेतुस्तोममेव प्रत्यक्षसामग्रीपदेनोपादायसिद्धितदन्यतरत्वाव
२६ च्छिन्नाभावस्य पक्षताविधयानुमितिहेतुत्वमतो नान्योन्याश्रय इत्यत आह स्थाणुत्वेति आरोपक्षणेति अनुमितिमात्रस्यैवानुत्पत्तिभि
या सिद्धिप्रत्यक्षसामग्र्यन्यतराभावस्यैकार्यसहवर्तित्वेन हेतुत्वासंभवादिति भावः प्रतियोग्यारोपातिरिक्तस्य प्रत्यक्षकारणस्तोमस्यैवप्र
त्यक्षसामग्रीपदेनाभिधानात्प्रतियोग्यारोपस्याभावप्रत्यक्षप्रतिहेतुत्वे मानाभावाच्चेदं न युक्तमित्यस्वरसेन कश्चिदित्युक्तं स्वयं दूषणमा
५ न ह। वस्तुतस्त्विति ननु स्वानन्तर्यमन्यथासिद्धत्वं न च प्रत्येकाभावस्यान्वयव्यतिरेकयोर्विवादग्रस्तमत आह। नियमेति अन्यतरत्वेन प्रति
योगिज्ञानात्पूर्वं प्रत्येकप्रतियोगिज्ञानध्रौव्येन प्रत्येकाभावस्यैव प्रथमोपस्थितत्वादित्यर्थः। ननु प्रत्येकाभावाग्रहेपि शाब्दादिनान्यतर।
त्वावच्छिन्नाभावस्य ग्रहसंभवान्नेदं युक्तमत आह लाघवादिति प्रत्येकाभावत्वेन हेतुतायावच्छेदकलाघवादित्यर्थः प्रत्येकमनुमित्सावि
रहविशिष्टसिद्ध्यभावत्वेन तथाविधप्रत्यक्षसामग्र्यभावत्वेन च तथात्वं अनुमितिहेतुत्वमित्यर्थः ननु प्रत्येकाभावत्वेन हेतुद्वयमपेक्ष्यान्य
तराभावत्वेन गुरुणाप्येकमेव हेतुत्वं कल्पनार्हमत आह। अन्यथेति। अत्र पक्षतायां बाधादेरित्यादिना सत्प्रतिपक्षसंग्रहः तथा चानु
विरह मित्साविशिष्टसिद्धेस्तथाविधप्रत्यक्षसामग्र्या बाधसत्प्रतिपक्षादेश्चान्यतमत्वावच्छिन्नाभावत्वेनैवानुमितिहेतुतास्याद्बाधाद्यभावस्य
पृथक्कारणत्वे गौरवादित्यर्थः न च विशिष्टबुद्धिसामान्यं प्रत्येव बाधसत्प्रतिपक्षयोर्विरोधित्वात् पक्षताकुक्षौ तन्निवेशानौचित्यमिति वा
च्यं सति बाधादिनिर्णये बुभुत्सादशायां विशिष्टप्रत्यक्षवत्तादृशानुमित्यादिप्रसंगेन विशिष्टत्वानुमितित्वावच्छिन्नं प्रत्यपि बाधादेर्विरोधि रामः
त्वस्यावश्यकत्वात् वस्तुतोन्यत्रान्तर्भावप्रसंगादितिग्रंथस्यान्यतरत्वेन प्रतिबंधकतायामन्तर्भावप्रसंगादित्यर्थः तथा च विशिष्टबुद्धिसामान्ये २६

विशिष्टानुमितित्वाद्यवच्छिन्नेवाबाधसत्प्रतिपक्षान्यतरत्वावच्छिन्नाभावत्वेनहेतुताप्रसंगएवग्रंथतात्पर्यमन्यथातद्विधेयकानुमितित्वा
वच्छिन्नंप्रत्येवसिद्धिप्रत्यक्षसामग्र्योस्तत्प्रकारकानुमितित्वावच्छिन्नंप्रत्येवबाधसत्प्रतिपक्षयोर्विरोधित्वात्तावदन्यतमत्वावच्छिन्नाभा
वत्वेनपक्षतायामनुगतानुमितिहेतुत्वासंभवादितिध्येयम् यद्वाबाधस्यधीविशिष्टधीसामान्यविरोधितयासाध्यविधेयकानुमितिंप्रतिप
क्षतायाहेतुतायामन्तर्भावेविपरीतगौरवमाशंक्यैवदीधितिकृताबाधादेरित्यत्रादिपदमुपात्तंतेनतत्तल्लिंगकपरामर्शाभावकालीनतत्तल्लिं
गकानुमित्याव्यक्तीनांपरामर्शधर्मिकतत्तदप्रामाण्यव्यक्तीनांचोपग्रहः पक्षधर्मिकसाध्यविधेयकानुमितित्वावच्छिन्नंप्रत्येवसिद्धिप्रत्य
क्षसामग्रीनिरुक्ततल्लिंगकानुमित्यापरामर्शधर्मिकतत्तदप्रामाण्यव्यक्तीनामन्यतमाभावत्वेनाप्यनुमितैकरूपेणपक्षतायाःकारणत्वंस्या ताने ६
दितिफलितार्थः अथवाननुसिद्धिप्रत्यक्षसामग्र्योरन्यतरत्वावच्छिन्नाभावस्याखंडस्यतद्व्यक्तित्वेनैवसाध्यविधेयकानुमितिहेतुत्वंवाच्यम
नःप्रत्येकाभावत्वेनहेतुतायांनलाघवावकाशइत्यतस्तत्प्रतिबंधिमाह अन्यथेति। यद्यखंडाभावस्यतद्व्यक्तित्वेनसाध्यविधेयकानुमितित्वा
वच्छिन्नंप्रतिहेतुत्वेबाधकाभावात्प्रतियोग्यविशेषितरूपेणाभावस्यहेतुतामन्यथासिद्धान्तपरित्यागस्तुसिद्धिप्रत्यक्षसामग्र्योरन्यतरत्वाव
च्छिन्नाभावस्याखंडस्यापिहेतुतायांसमानइत्यपिमाहशामपरःपंथाः अथाभावद्वयस्यहेतुत्वेऽनुमित्याविरहस्यद्विर्निवेशाद्गौरवमन्यत
राभावस्यहेतुतायांतुसिद्धिप्रत्यक्षसामग्र्यन्यतरत्वेनानुमित्याविरहस्यसकृदेवतस्यविशेषणाल्लाघवमित्याशंक्यानिषेधतिसिद्धेश्चेतिअ न२
न्यतराभावस्यहेतुत्वपक्षेप्यनुमित्याविरहोद्विर्निवेशइत्याहशाब्दसिद्धावित्यादिनाशाब्दान्यसिद्धिदशायामशाब्दप्रकारिकेच्छैवनोत्प
द्यतेइत्यतःशाब्दसिद्धावित्युक्तंविरहस्यनिष्टथविशेषणतायाग्रेऽन्वयः अनुमित्यादावित्ति अनुषंगवशादनुमितेरनुमितेरनुत्पादादित्य

जा·प· र्थः प्रकारांतरेणासंभवात्स्वसिद्धिकायाएवसिषाधयिषायाअनुमितिनिर्वाहकत्वादिति भावः अनुमितित्वादीत्यादि पदं प्रत्यक्षातिरिक्त
२७ ज्ञानत्वादिप्रकारिकेच्छासंग्रहार्थं पृथगिति न च यद्यदिच्छासत्वे सिद्धिप्रत्यक्षसामग्र्योरन्यतरदशायामनुमितिः तत्तदिच्छाव्यक्त्यभाव
कूटविशिष्टस्य सिद्धिप्रत्यक्षसामग्र्योरन्यतरस्याभावः पक्षता न तथा च प्रत्यक्षसामग्रीकालीनाअशाब्दज्ञानं जायतामितीच्छाव्यक्तेरुत्तेज
ककोटावप्रवेशादेव तदानीमनुमित्युत्पादासंभवादनुमित्सायाः सकृदेव विशेषणत्वं संभवतीति वाच्यं सिद्धिप्रत्यक्षसामग्र्यन्यतरस्थले
यत्तत्तदिच्छाव्यक्तीनामभावसमुदायस्यैकत्रनिवेशेनेषां विशेष्यभावे विनिगमनाविरहेण महागौरवात्तदपेक्षया सिद्धिस्थलीयत्तत्तदि
च्छाविरहविशिष्टसिद्ध्यभाववत्वेन प्रत्यक्षसामग्रीस्थलीयत्तत्तदिच्छाविरहविशिष्टप्रत्यक्षसामग्र्यभाववत्वेनैव हेतुत्वस्यौचित्यादिति भावः
स्वनिवर्त्तकेति स्वनिवर्तकं यत्प्रत्यक्षादि तत्सामग्रीसमवहितत्वात्तदुत्तेजकत्वमिति स्वनिवर्त्तकानुमितिसामग्रीसमवहितायाअनुमित्सा
५६ याउत्तेजकत्वरक्षार्थं प्रत्यक्षादीत्युक्तमादिनावशाब्दोपस्थित्यादेः संग्रहः अन्यत्वादिनेत्यादिपदेन सिद्धिप्रत्यक्षसामग्र्यन्यतरदशायां यद्यदि
च्छाव्यक्तिसत्वे चानुमितिस्तावदन्यतमत्वरूपस्येच्छानुगमकधर्मस्योपग्रहः ननु प्रत्येकाभावयोः कारणताद्वयमपेक्ष्यातिगुरुणाप्युक्ता
न्यतराभाववत्वेनैव कारणत्वं युक्तं बाधसत्वेऽपि पक्षान्यतराभाववत्वेनैव हेतुतास्वीकारेऽपि क्षतिविरहादत आह अन्यतरत्वघटकयोरिति सि
द्धिभेदविशिष्टं यत्प्रत्यक्षसामग्रीभिन्नं तदन्यत्वं प्रत्यक्षसामग्रीभेदविशिष्टं यत्सिद्धिभिन्नं तदन्यत्वं वा सिद्धिप्रत्यक्षसामग्र्यन्यतरत्वमित्यत्र
विनिगमकाभावस्तथा चानुमित्साविरहविशिष्टतादृशप्रत्येकावच्छिन्नाभाववत्वेन न हेतुतावच्छेदकभेदेन कारणताद्वयं युक्तमिति भावः न राम:
नु प्रतियोगिविनैव सिद्धिप्रत्यक्षसामग्र्यन्यतरत्वरूपाखंडभेदव्यक्तिः पक्षतायां निविष्टा न च विशेषणविशेष्यभावव्यत्यासशंकापि नास्ति न २७

चप्रतियोगिविनाकृतास्वंडभेदव्यक्तिमुपादायपक्षतानिर्वचनेप्रतियोग्यविशेषितेनापिसिद्धिप्रत्यक्षसामग्रीगगनाद्यन्यतमत्वेनसिद्धिप्रत्यक्षसामग्र्यनुमितिपूर्ववर्त्तिभिन्नतत्ज्ञानादिघटितान्यतमत्वेनवाऽवच्छिन्नाभावाश्चानुमितौहेतवस्तुस्तथाचपरामर्शत्वादिनाप्यनुमितौहेतुत्वंनस्यादित्युक्तप्रायमितिवाच्यंसिद्धिमात्राभावस्यपक्षतात्वेपितादृशाभावानांहेतुताप्रसंगस्यान्यथासिद्ध्यानिरसनीयत्वात्तन्मतेगुरुधर्मावच्छिन्नाभावत्वेनैवमन्मतेपिगुरुधर्मावच्छिन्नप्रतियोगिताकस्याप्यखण्डाभावस्यतद्व्यक्तित्वेनहेतुतायामन्यथासिद्धिसंभवादतआहआत्मनिष्ठेतिभिन्नभिन्नेनस्वजनकादृष्टवत्त्वादिनाकालिकरूपेणवेत्यर्थः कालिकादिघटितसामग्र्याः प्रतिबंधकत्वेगौरवादाहतत्तदसाधारणेतिचक्षुःसंयोगाद्यात्मिकायाः प्रत्यक्षसामग्र्याइत्यर्थः अभावः कारणमितिप्राक्तनेनान्वयः ननुप्रत्यक्षासाधारणकारणसमवहितमनोयोगसिद्ध्यन्यतरयोःसमवायासंबंधावच्छिन्नाभावएवहेतुर्वाच्यइत्यतआहमणिविशिष्टस्येतिमनोयोगादेरित्यादिनाज्ञानाद्युपग्रहः अयोगादितिएकत्रजनकत्वप्रतिबंधकत्वयोर्विरोधादितिभावः यद्यप्यात्ममनोयोगत्वेनानुमितिजनकस्यापिनिरुक्तान्यतरत्वेनतत्प्रतिबंधकत्वेपिनक्षतिःएकरूपेणैवतयोर्विरोधात्मणित्वापेक्षयागुरुत्वेनैवमणिविशिष्टवन्हित्वेनदाहप्रतिबंधकत्वाकल्पनान्तथापिविशिष्टाभावस्यविशेषणाद्यभावाननिरिक्तत्वादखंडतद्व्यक्तित्वेनहेतुत्वासंभवादुक्तान्यतरत्वावच्छिन्नाभावत्वेनचहेतुत्वेऽन्यतरत्वांशेविशेषणविशेष्याभावव्यत्यासेनगुरुतरकार्यकारणभावद्वयापत्तेःसिद्धिप्रत्यक्षसामग्र्योःप्रत्येकाभावत्वेनैवहेतुत्वमित्येवमूलंयुक्तमितिध्येयं तथाचेतिप्रतिबंधकतावच्छेदकसंबंधाननुगमेचेत्यर्थः तयोःसिद्धिप्रत्यक्षसामग्र्योःप्रतियोगितावच्छेदकासंबंधभेदादिवत्तदवच्छेदकताघटकसंबंधभेदादप्यनुगतरूपेणासंभवंदर्शयितुमाह एकमितिएकप्रहराद्यवच्छेदेनैकात्मनिसिषाध

यिषाविरहविशिष्टसिद्धेस्सत्वेप्यनुमित्सादशायां पक्षतासंपत्त्यर्थमेककालेनिकालपदं प्रक्षणप्रमिति यद्यपि पूर्वक्षणावच्छेदेनैवानु-
मित्साविरहविशिष्टायाः सिद्धेरनुमित्सादशायामपि सत्वात्तदानीं पक्षता न स्यात्तत्वानुमित्साविरहेणोपलक्षितायाः सिद्धेः सिषाधयिष-
दशायां सत्वेपि न तद्विरहवैशिष्ट्यावच्छिन्नसिद्धेः सत्वं तदानीं विशेषणाभावदिति वाच्यं तथा सत्येकक्षणावच्छेदेनेत्यस्य वैयर्थ्यापत्तेः
तथापि सामयिकानां तत्तद्भावानां समवायावच्छिन्नमेवाधिकरणत्वस्वरूपाख्यसंबन्धेन त्वधिकरणत्वमात्रं न तथा सति प्रतियोगिसत्व-
दशायामपि तदधिकरणे तदभावापत्तेः तदीयसंबंधप्रयुक्तत्वात्तद्धत्वस्येत्याशयेनैकक्षणावच्छेदेनेत्युक्तं अत एव रूपवत्तानियामक-
संबंधेन शुद्धसमवायः वाय्वादेरपि रूपवत्तापत्तेः किंतु तत्तद्व्यक्तिनिरूपितसमवाय एवेति सिद्धांतः यदि चाभावस्य स्वयमेव स्वरूप-
संबंधः स च प्रतियोगिसत्वदशायामधिकरणेन वर्तते प्रतियोगिन एव विरोधित्वात् वृत्तिमत इव वृत्तेरव्याप्यवृत्तित्वात् समवायिकत्वम-
भावस्य न समवायघटितस्वरूपसंबंधेन वृत्तिमत्वं परंतु समयविशेषावच्छेदेन स्वरूपसंबंधेन वृत्तिमत्वं गोत्वाद्यभावानां तु वृत्तिर्न समयाव-
च्छिन्नाभावात् भावाभावयोरेकधर्मिणि सत्तायामेव विरोधभंजनार्थमवच्छेदकस्वीकारात् इदानीमश्वे गोत्वं नास्तीत्यादिप्रतीतौ चाधि-
करणत्वेनैव समयस्य भानादिति विभाव्यते तदैकात्म्यवृत्तित्वलक्षणस्य वैशिष्ट्यस्य समवायित्वप्रदर्शनार्थमेवैकक्षणावच्छेदेनेत्युक्तं न
च वैशिष्ट्येपि तदन्तर्भाव इत्यस्मद्गुरुचरणाः अन्याहुः शंकाश्रयनिष्ठादृष्टजन्यत्वादिरूपं न चानुमित्साविरहविशिष्टसिद्धेरनुमित्साविरह-
विशिष्टप्रत्यक्षसामग्र्याश्चान्यतरत्वावच्छिन्नाभावत्वेन हेतुर्द्विविधस्य वैशिष्ट्यस्य प्रवेशेपि नाननुगम इति वाच्यं प्राक्क्षणावच्छेदेन सिषाध-
यिषाविरहविशिष्टायाः सिद्धेः प्रत्यक्षसामग्रीवा तस्याः सिषाधयिषाविरहविशिष्टतादशायामपि निरुक्तान्यतरत्वेन प्रतिबंधकत्वात्तदुत्तरक्ष-

णेऽनुमित्यानापत्तेः नच सिषाधयिषाविरहविशिष्टतादृशायां सिद्धेः सिषाधयिषाविरहविशिष्टान्यत्वमेव भेदस्याव्याप्यवृत्तित्वात् तथाच
तदानीं निरुक्तान्यतरत्वावच्छिन्नं नास्त्येवेति वाच्यं तथाप्युक्तान्यतराभावेन हेतुत्वे गुरुतरकार्यकारणभावद्वयापत्तिः तादवस्थ्यात् विशि
ष्टाभावस्याखण्डस्य प्रमाणाभावेन निरस्तत्वादिति भावः ननु यद्यप्यनुमित्साविरहविशिष्टप्रत्यक्षादिसामग्र्यभावोपि पृथगनुमितिहेतुस्तदामू
लस्य साधकमानपदेनापि सामग्रीविशेष एवाभिधेयतां यथाश्रुतानुरोधात्तु साध्यवत्तानिश्चय इत्यत आह सामग्रीविशेषेति लाघवादि
ति अनुमानातिरिक्तसिद्धिसामग्रीमये सिद्धेः प्रवेशो लाघवादित्यर्थः तथाच प्रत्यक्षपदवृत्तिनिमित्तनिर्वचनानुरोधादेव साधकमानपदेन
साध्यनिश्चयो व्याख्यातुं इति भावः प्रवृत्तिनिमित्तनिर्वचने मूलस्वरसमाहे तदेवेति अन्यथानुमितिकरणमित्येव ब्रूयात्तावतापि यद्यपि इ
त्याद्युक्तशंकाव्युदाससंभवादिति भावः नन्वेवमपि लाघवाद्बाधनिश्चयाभाव एव पक्षपदप्रवृत्तिनिमित्तमस्त्वित्यत आह फलानुपहितेति
स्वविषयसिद्ध्यनुपहित तदनुमित्साविरहविशिष्टेत्यर्थः विशिष्टबुद्धिसामान्यं प्रत्येव बुभुत्साविरहविशिष्टबाधनिश्चयाभावत्वेन हेतुत्वमते
पि लाघवमाविष्कर्तुमनुपहितांतानुसरणं न निविशत इत्यस्य पक्षपदशक्यतावच्छेदकतायामित्यादिः ननु सिद्ध्यभावस्य पक्षतात्वेपि सि
द्धिदशायां पर्वतादौ पक्षव्यवहारो दुर्वारः समवायावच्छिन्नसिद्ध्यभावस्य विशेषणतया पर्वते सत्त्वात् न च तदीयसिद्धिविशेष्यत्वाभाव ए
वतं प्रति पक्षव्यवहारनिमित्तं न स्यादनुमित्यहेतुत्वात् अनुमितिहेतावेव पक्षतायाः प्रवृत्तिनिमित्तत्वात् पक्षतानुमितिहेतुरित्यादिव्यवहा
रादाह विशिष्टेति अनुमित्साविरहविशिष्टेत्यर्थः परंपरासंबंधादिति तथाच पद यत्र पुंसि निरुक्तसिद्ध्यभावस्तत्कालावच्छेदेन तत्पुरुषीयप
क्षप्रतियोगिविशेष्यत्वाभावरूपपरंपरासंबंधेन निरुक्तसिद्ध्यभाववत्त्वं तत्कालावच्छेदेन तत्पुरुषं प्रति पक्षव्यवहारनिमित्तमिति भावः

 ननु सिषाधयिषाविरहविशिष्टप्रत्यक्षादिसामग्र्यभावस्य पृथगपि हेतुत्वं दुर्घटं पुमन्तरावच्छेदेनानुमित्साविरहविशिष्टायाः प्रत्यक्षसा
मग्र्याः सत्त्वदशायामनुमित्सासत्त्वेऽनुमित्यपलापापत्तेः नचानुमित्साकालीनान्यत्वमेव सामग्रीविशेषणं तथा सति पुमन्तरेऽनुमित्साद
शायां नहि धुरस्यापि पुंसः प्रत्यक्षसामग्रीसत्त्वेऽप्यनुमित्यापत्तिः अतः पुरुषविशेषान्तर्भावेण सामग्र्यभावहेतुत्वं निर्वक्ति एकस्येत्यादि
नानहि रहिणः अनुमित्साविरहिणः तत्पुरुषीयेत्यादि अत्र तत्पुरुषीयत्वं तत्पुरुषावच्छिन्नत्वं न तदनुमित्साविरहस्यैव विशेषणं तेन तत
त्पुरुषावच्छेदेनानुमित्साविरहकालीनो यस्तत्पुरुषीयप्रत्यक्षसामग्रीविशेषस्तद्विरहः पर्य्यवस्यति यथाश्रुतेन तत्पुरुषीयत्वस्यानुमि
त्साविशेषणत्वे तत्पुरुषीयानुमित्सादशायामपि घटावच्छेदेन तदभावसत्त्वात्तदानीं तत्प्रत्यक्षसामग्र्या अपि तदीयानुमितिं प्रतिबंधक
त्वापत्तेः पक्षतायामिवात्राप्यनुमित्साव्यक्तयो विशेष्यनिवेश्याः तेन वस्त्वं नरस्यापि परामर्शदशायामनुमितित्वाप्रकारकेच्छासत्त्वेऽपि
सन्निकृष्टस्य वह्न्यादेर्नानुमितिर्नवा वह्नेरनुमित्साप्रत्यक्षेच्छयोः सत्त्वदशायामुभयसामग्रीसमवधानेऽनुमितिस्तत्रानुमित्साव्यक्तेरु
त्तेजककोटौ प्रवेशात् प्रत्यक्षबुभुत्साविरहविशिष्टाया एवानुमित्साया उत्तेजकत्वाद्दोष इत्यपि वदंति सिद्धिसामग्रीमात्रस्याप्रतिबंध
कत्वादुक्तविशेषिततेन प्रत्यक्षात्मकसिद्धिसामग्रीलाभः यद्यपि सिद्ध्यात्मकप्रत्यक्षस्यापि सामग्रीमात्रं न प्रतिबन्धकं प्रसिद्धसाध्यक
स्थले सर्वत्रैव साध्यवत्त्वोपनीतभानसामग्रीसंभवात् नापि लौकिकप्रत्यक्षसामग्री तथा चेशेसर्पत्वव्याप्यवत्तानिश्चयदशायां मण्डूकव
शां जलादिबलात् सर्पत्वाद्यलौकिकप्रत्यक्षानुत्पत्तिप्रसंगात् तथा साक्षात्कारत्वनिरूपितसाध्यनिष्ठप्रकारताप्रत्यक्षसामग्रीप्रवेश्यता दृशी 
च प्रकारता लौकिक इव दोषविशेषजन्येऽपि साध्यस्य प्रत्यक्षे वर्त्तत एव उभयत्रैव सर्पं साक्षात्करोमीत्यनुभवादित्यन्यत्र विस्तृतं न चैवं सा 

ध्यस्यनिर्विकल्पसामग्र्याःप्रतिबंधकत्वंनस्यात् इष्टत्वात नतस्याःपृथक्प्रतिबंधकत्वोपगमेविशिष्टस्यभावाच्च अनन्यगतिकतयेतिनचैवं
तत्प्रत्यक्षसाध्यकानुमितिं प्रत्यनुमित्साविरहविशेषितेन तद्धर्मिकसाक्षात्कारत्वनिरूपिततत्प्रकारताकत्वेनैवविरोधित्वं तथा च तदभाव
स्यकार्यसहभावेनहेतुत्वादेवनन हृत्ताप्रत्यक्षोत्पत्तिकालेतादृशानुमित्यन्यथागतिरस्त्येवेतिवाच्यं यत्रपर्वतत्वसामानाधिकरण्येनवन्हि
मत्ताप्रत्यक्षोत्पादः तत्रोत्तरकालंपर्वतत्वावच्छेदेनापिवन्ह्यनुमितेरनुत्पादप्रसंगात् नचपर्वतत्वावच्छेदेनवन्ह्यादिसाक्षात्कारत्वेनैव।
विरोधित्वमितिवाच्यं तथासतिपर्वतत्वसमानाधिकरण्येनसाध्यवत्ताप्रत्यक्षसामग्रीसत्वेप्यनुमित्यापत्तेः वस्तुतोयत्रानुमित्सानंतरंसाध्य
तद्व्याप्यवत्वयोःप्रात्यक्षिकपक्षधर्मिकनिश्चयादनुमितिस्तत्रकार्योत्पत्तिकाले अनुमित्साविरहविशिष्टसाध्यवत्ताप्रत्यक्षाभावस्यसत्वा
त्कार्यसहभावेनतदभावस्यहेतुत्वंदुर्घटमेवेतिध्येयं अननुगतत्वादिति मणिमंत्रौषधीनामुत्तेजकत्वस्याभावादितिभावः इहापि अनुमि
तिस्थलेपिदर्शितइति अनुमिनुयांप्रत्यक्षादिभिन्नंज्ञानंजायतामित्यादिनानाविधेच्छायाउत्तेजकत्वस्यप्रदर्शितत्वादितिभावः ननुपक्ष
सकयत्साध्यकानुमितिस्थलेसिद्धिदशायामेकविधैवानुमित्सा तस्यास्तादृप्येणहेतुतायामनुगमएवसिद्धिदशायद्यनुमित्सासत्वेऽनुमि
तिस्तदनुमित्साविरहकूटत्वावच्छिन्नाभावत्वेनैवानुगतरूपेणवासिद्ध्युत्तरानुमितिसामान्यहेतुत्वंवाच्यमत आह सिद्ध्युत्तरेतिसिद्धिसा
मान्याव्यवहितोत्तरत्वमप्रसिद्धं तत्तत्सिद्ध्युत्तरानुमितित्वमननुगतं सिद्ध्युत्तरत्वमात्रंचातिप्रसक्तमितिभावः सिद्धिस्थितिकालीनामिति स्ववृत्ति
प्रागभावप्रतियोगित्वकालिकोभयसम्बन्धेनसिद्धिविशिष्टामित्यर्थः प्रागभावासत्वमतेप्याह स्वेतरेति वृत्तिभेदप्रतियोगित्वकालिकोभयसं
बंधेनसिद्धिविशिष्टामित्यर्थः तेनस्वत्वाननुगमेप्यदोषः विनापीतिसिद्धिनाशकालोत्पन्नानुमितीनांसिद्धिस्थितिकालीनत्वाभावेनानुमि

जा॰प॰ त्सायास्तत्राप्रयोजकत्वादितिभावः ननु तदानीमपि कस्यचित्सिद्धिसत्त्वे न सिद्धिनाशकालीनोत्पन्नानुमितेरपि स्वेतरसिद्धिकालोत्पत्तिकत्व-
३० मेवेत्यनुमित्सां विना तस्याः कथमुत्पादः स्यादत आह एकस्येति अनुमित्यादेरिति तदनुमितेरप्यन्यदीयसिद्ध्युत्त रोत्पत्तिकत्वेनानुमि-
त्साप्रयोज्यत्वादितिभावः अनंतेति तत्पुरुषीयस्वेतरसिद्धिकालीनतत्पुरुषीयानुमितितत्पुरुषीयानुमित्सायाइव तत्पुरुषानुमितिसा-
मान्यंप्रत्यपि विनश्यदवस्थिततदीयतत्तत्सिद्ध्यभाववत्त्वरूपेण हेतुत्वस्यावश्यकतया पृथक्पुरुषीयानुमितिस्थलएवानेन हेतुहेतुमद्भाव-
प्रसंगइत्यर्थः तेन सिद्धिनाशदशायामपि तस्यानुमित्युत्पादस्यानुद्धारात्न्यूनत्वमित्यपास्तं ननु सिद्ध्यव्यवहितोत्तरानुमितित्वावच्छिन्नप्र-
त्येव सिषाधयिषायाः कारणत्वं वाच्यं तदव्यवहितोत्तरत्वं च स्ववृत्तिप्रागभावप्रतियोगित्वसामानाधिकरण्योभयसंबंधेन सिद्धिविशिष्टायाः
कृतेः सामानाधिकरण्यरूपं ग्राह्यमतो नोक्तदोषावकाश इत्यत आह अपिचेति सामग्रीन इति सिद्ध्यभावस्थलीयानुमितौ क्लृप्तहेतुताकपराम-
र्शात्मककारणस्तोमादित्यर्थः ननु विशेषसामग्रीसहितायाएव सामान्यसामग्र्याः कार्यजनकत्वात् प्रकृते चानुमित्सापरामर्शमात्रादप्य-
प्यनुमित्युदयात् तथाचोक्तनियमाभावात्सिद्ध्यात्मकविशेषसामग्रीविरहात्कुतोऽनुमित्यापत्तिरत आह नहीति ईदृशेति अनुमित्साघटि-
तेत्यर्थः नास्तीति विनानुमित्सां परामर्शमात्रादप्यनुमित्युदयात् तथाचोक्तनियमाभावात् सिद्ध्यभावस्येव सिद्धिस्थलेपि विशेषसामग्रीं विनैव
सामान्यसामग्रीमात्रादनुमितिः स्यादेवेति भावः अन्यत्र सिद्ध्युत्तरानुमितावनुमित्सायाइव तदनुत्तरा नुमितावपि सिद्धिसामान्याभाव-
स्य हेतुत्वं वाच्यं तथाच परामर्शादिसामान्यसामग्रीसत्त्वेपि सिद्धिदशायां निरुक्तविशेषसामग्रीविरहादेव नानुमितिरत आह तदिति सिद्ध्युत्त- रामः
रानुमितौ सिद्ध्यभावरूपसामग्र्यंतरकल्पने चेत्यर्थः अतिगौरवमिति विशेषसामग्रीद्वयकल्पनामपेक्ष्यानुमितिसामान्ये एकस्यैव विशिष्टसि- ३०

द्ध्यभावस्य हेतुत्वे लाघवादिति भावः न च सिद्ध्युत्तरवर्तिनि तदनुमितिव्यक्तिष्वप्यवश्यं तत्तत्परामर्शादिव्यक्तेर्विशिष्टहेतुत्वमुपेयं अन्यथा
परामर्शादेः सामान्यकारणस्याविशिष्टत्वात्तत्रैकानुमित्युत्पत्तिदशायां भाव्यनुमित्यन्तरापत्तेः तथा च तत्तत्परामर्शाद्यात्मकविशेषसा
मग्रीविरहादेव सिद्धिदशायामनुमित्यापत्त्यसंभव इति वाच्यं यत्क्रमेण सिद्धिपरामर्शसिद्धिनाशानुमितयस्तत्रान्त्यान्त्या एवानुमितिव्यक्तेः सि
द्धिनाशोत्पाददशायामापादनीयत्वात्तद्व्यक्तिहेतोः परामर्शस्य प्रागपि सत्त्वात् न च तथाविधानुमितिव्यक्तिषु तत्तत्सिद्धिनाशक्षणस्य त।
त्क्षणोत्पन्नज्ञानादेर्वा विशिष्यहेतुत्वकल्पना – तदभावादेव न तादृशानुमितिरिति वाच्यं क्षणादीनां विशिष्यहेतुतामन्यथासिद्धत्वात् अन्य
थासर्वत्रैव तत्तत्क्षणसंबन्धानां विशिष्यहेतुतयैव सामंजस्ये विशेषिनः कारणांतरस्य क्वापि कल्पनं न स्यात् अनंततत्तत्क्षणव्यक्तीनां तत्रोत्प
न्नज्ञानादीनां वा विशेषिने हेतुत्वकल्पनामपेक्ष्य विशिष्टसिद्ध्यभावस्यैकस्यैकस्यैवानुमितिसामान्यहेतुत्वकल्पनाया एव लाघवेनौचित्यादिति
भावः न चास्तु तत्तदनुमित्साविरहविशिष्टसिद्ध्यभावत्वेन हेतुता या तत्तदनुमित्साविरहाणां विशेष्यविशेषणभावेन गुरुत्वादनंतत्वाच्च तद
पेक्षया यादृशया दृशेच्छासत्त्वे सिद्धिसत्त्वेऽनुमितिस्तादृशतादृशेच्छात्वेन सिद्ध्यनुत्तरानुमितिं प्रति तु सिद्धिसामान्याभावत्वेन कारणत्वकल्प
नैव लघीयसीति प्राहुस्तच्चिंत्यं सिद्धिस्थल इत्यर्थः सा अनुमितिः तत्कारणस्येत्यस्यानुमित्सात्मकेत्यादिः सा सिद्ध्युत्तरत्वावच्छिन्नानुमितिः प्राग
त्वमतं निरस्यति कारणस्येत्यादिना ननु पक्षताविशिष्टस्य परामर्शत्वेन परामर्शविशिष्टपक्षतात्वेपि विनिगमकाभावेन हेतुत्वापत्त्या द्वयोरेव
लाघवात्स्वातन्त्र्येण हेतुत्वमत उक्तं कारणेति तथा चानुमितिकारणस्य व्याप्तिधियः सव्यापारत्वनियमाद्व्यापारविधयैव परामर्शस्य हेतुत्वमा
वश्यकं पक्षतायास्तु व्यापारत्वासंभवात्तदनुरोधेनापि न हेतुत्वमित्येव स्फुटं विनिगमकमिति भावः न च स्वमते मनस एवानुमितिकारणत्वात्

त्संयोगएवजन्यमात्रेव्यापार इत्यनुमितौपक्षताविशिष्टपरामर्शविशिष्टनिरुक्तसिद्ध्यभावेनपक्षतायाअपिहेतुतायांविनिगमकाभावएवे
तिवाच्यं परामर्शविशिष्टपक्षतायाहेतुत्वस्यतत्रहिपरामर्शोनसिद्धिविशेषणंनव्यासनिपरामर्शविशिष्टायानिरुक्तसिद्ध्यभावत्वेनहेतुत्वेप
रामर्शभूतस्यापिपुंसोऽनुमित्यापत्तेः तस्यापिपरामर्शविशिष्टसिद्धेरभावत्वात् न चपरामर्शविशिष्टोयोनिरुक्तसिद्ध्यभावस्तत्वेनहेतुत्वंमि
थोवैशिष्ट्यापन्नयोःसिद्धिपरामर्शयोरभावांशेविशेषणीभूयावच्छेदकत्वाभावाद्व्यासज्यवृत्त्यवच्छेदकत्वानंगीकारात् अन्यथानिरुक्त
सिद्ध्यभावत्वपरामर्शयोरेवव्यासज्यवृत्त्यवच्छेदकत्वेनसामंजस्येनतयोर्विशेष्यविशेषणभावेविनिगमनाविरहाद्भावनस्यात्मत्तप्रलपितत्वा
पत्तेःपक्षताविशिष्टपरामर्शस्यतुवैशिष्ट्यापन्नस्यैवावच्छेदकतयातादृशरूपेणहेतुतायांबाधकाभावादितिध्येयं प्रतिबंधकांतरंबाधनिश्चयप
दि ननुकारणतावच्छेदकविशिष्टसत्त्वस्यैवकार्योत्पत्तिनियामकत्वात् तन्नैवान्वयव्यतिरेकानुपेक्षणीयावतन्त्राह अन्यथेति अन्वया
दिसत्वेप्यहेतुत्वेइत्यर्थः ध्वंसाकारणत्वाप्रसिद्ध्यानन्निमित्तकारणस्यतदवच्छेदकत्वासंभवादाह यथासंभवमितिसमवायिकारणादित्या
दिनाऽसमवायिकारणत्वस्योपग्रहः तथाचघटादिकार्यस्यप्रतिनियतदेशत्वरक्षायैतत्तत्कपालद्वयसंयोगादेर्घटहेतुत्वमावश्यकमिति
नत्वैवंदंडत्वादिकमवच्छेदकंस्यादित्यर्थः कारणत्वेबाधकसत्वात्कारणतावच्छेदकैवपक्षतेत्यभिप्रायेणसाध्यसंदेहःसिषाधयिषैववाप
क्षतेत्याशयेनाशंकते अथेतिकार्यकालवृत्तेरेवेति अन्यथापूर्वकालेऽप्यभावसत्वादनुत्पत्तिकालेपिदाहापत्तिरितिभावः यद्यपिकार्यस
हवर्तित्वस्यकारणतावच्छेदकत्वेतदवच्छिन्नस्यप्रतिबंधकाभावस्यपूर्वसत्वमपेक्षितंनतदासत्यपिमण्यभावेदाहादिकार्यंनस्यात् पूर्वका
लेदाहाद्युपहितस्यतस्याभावात् कार्यसहवर्तित्वोपलक्षितस्यपूर्वसत्वापेक्षणेमण्याद्युत्पत्तिदशायामपिदाहादिकार्यप्रसंगः कदाचिद्दाहा

रिदाहादिसहवर्त्तित्वादेवमण्याद्यभावस्यमण्याद्युत्पत्तेःपूर्वंसत्त्वात् कार्यसहवर्त्तित्वस्यनकारणतावच्छेदकत्वंमण्याद्यभावत्वेनैवहेतुत्वात्प्र
तिबंधकाद्यभावविशेषितस्तत्स्वाव्यवहितोत्तरक्षणत्वादिसंबंधेनैवसामग्र्याःकार्योत्पत्तिव्याप्यत्वात्प्रतिबंधकोत्पत्तिकालेकार्योत्पत्तिप्रसं
गःसमवायिकारणस्येत्थमेवकार्यसहभावेनहेतुत्वंविवेचनीयमितिदिक् ननुदेशीयमतेदाहादिकंप्रतितत्तद्दाहाद्युत्पत्तिकालावच्छेदेनतत्त
द्देशावर्त्तिमण्याद्यभावत्वेनहेतुत्वंकारणतावच्छेदकस्यपूर्वंसत्त्वानपेक्षणाच्चतत्तद्दाहोत्पत्तेरसत्त्वेपिनक्षतिरित्यनयैवदिशासमवायादिका
रणस्यापिहेतुत्वंनिरूपणीयमितिभावः तदसंभवादितिनिरुक्तसिद्ध्यभावस्यासंभवादित्यर्थः सानुमितिः तथात्वेनकार्यकालवृत्तित्वेनप्राचीनम
तेनेदंस्वसत्त्वेतुमण्युत्पत्तिदशायांमणिसामग्र्याःप्रतिबंधकत्वादेवनदाहः संयोगेनमण्यभावस्यमण्युत्पत्तिदशायामपिसत्त्वात्तस्यकार्य
सहभावेनहेतुत्वोपगमेप्यप्रतीकारादितिध्येयं नसर्वस्येतितथात्वेनहेतुत्वमित्यन्वयः ननुप्रतिबंधकाभावस्यतादृप्येणहेतुताव्याप्य
त्वाङ्गीरेवंप्रामाणिकमतमाह अन्यथेतिसहभूतस्येति अन्यथाघटादेर्नाशोत्पत्तिदशायामन्त्यदीयकर्मणातत्रसंयोगाद्युत्पत्तौक्षणिकका
र्यस्वीकारापत्तिरितिभावः तथात्वप्रसक्तौकार्यसहभावेहेतुत्वप्रसक्तौविजयमितिप्राभाकरैःकारणमात्रस्यैवकार्यसहभावेनहेतुत्वास्वीकारा
त् अन्यथाकालसत्तोपिप्रतियोगिनःपूर्ववर्त्तिमात्रेणैवहेतुत्वसंभवात्तेषामप्यतिरिक्तध्वंसकल्पनापत्तेरितिभावः एकपरामर्शादनुमिति
द्वयोत्पादेपिप्रवाहादाहक्वचिदितितथाचयत्रपूर्वपूर्वानुमितिदशायांपरामर्शान्तरस्यसामग्रीसंभवस्तत्रैवपरामर्शानुमित्योःप्रवाहासंभव
इतिभावः अनुभविकत्वादितिपक्षतानुमितिहेतुरित्यग्रेन्वयः ननूक्तस्थलेक्रमिकोनानुमितिप्रवाहःकिंत्वेकानुमितिनाशोत्तरमपरानुमित्यु
त्पत्त्यैवसदित्यतआह वार्थेति अर्थान्तरेतितथाचनिश्चितेवस्तुनिजिज्ञासाविरहादनाकांक्षिताभिधानेनपुरुषदोषतयैवनोद्भावनंनतुप्रमाण।

जा॰प॰ दोषतयेतिभावः अत्रेदमालोचनीयं समानविषयकप्रत्यक्षसामग्रीदशायामनुमित्यनुत्पादाद्वह्न्यादिप्रत्यक्षजनकतत्तदसाधारणकारणव्य
३२ क्तीनामेव वह्न्याद्यनुमितिविरोधित्वं वाच्यं कालादिसाधारणसामग्र्यास्तथात्वे गौरवात् तथा च वह्निचक्षुःसंयोगादिव्यक्तीनामिव वह्न्या
द्यात्मकविशेषणाद्यवगाहि वह्निमनाप्रत्यक्षहेतूनां पर्वतो वह्निमानित्यादिसिद्धिव्यक्तीनामपि तादृशानुमितिविरोधित्वमावश्यकं विनिग
मकाभावात् एवं च तत्रैव पर्वतो वह्निमानित्याकारकनिश्चयत्वेनैवानुगतरूपेण तत्तत्सिद्धिव्यक्तीनां तादृशानुमितिविरोधित्वं कल्पने लाघ
वात् ननु तत्तत्सिद्धिव्यक्तित्वेन गौरवादवश्यं पक्षतानुमितिहेतुः न चैवमतिलाघवेन साध्यनिश्चयत्वमपेक्ष्य साध्यवत्ताज्ञानत्वेन विरोधित्वम
स्तु पक्षे साध्यसंदेहोत्तरं तत्र साध्यवत्तानुमितेरनुभविकतया निश्चयत्वप्रवेशस्य प्रामाणिकत्वेन सिद्धिसत्त्वे प्रत्यक्षसामग्रीदशायामनुमित्यनुत्प
त्तेरनुभवसिद्धतया प्रत्यक्षसामग्र्यनंतरं तत्तत्सिद्धिव्यक्तित्वेनैव गुर्वपि प्रतिबंधकत्वं प्रामाणिकमिति वाच्यं साध्यवत्तापक्षज्ञानत्वेन संशयसा
धारणधर्मत्वेन प्रतिबंधकत्वे भ्रमत्वनिश्चयत्वस्योत्तेजकत्वापत्तिगौरवात्तदपेक्ष्य भ्रमत्वज्ञानानास्कंदितसाध्यवत्तानिश्चयत्वेन प्रतिबंध
कतायामेव विपरीतलाघवात् किं च सिद्धिकालीनेषु साध्यव्याप्यवत्तापरामर्शसहकृतव्याप्यवत्ताद्यंशे भ्रमत्वादिज्ञानदशायां न साध्यानुमि
———————— नि सत्त्व तादृशानुमितिं प्रति विशेषतस्तत्तद्भ्रमत्वज्ञानत्वेनानंतप्रतिबंधकत्वं गौरवात् पक्षधर्मिकसाध्यवत्तानि
श्चयत्वेनैवानुगतरूपेण तत्तत्सिद्धिव्यक्तीनां विरोधित्वं कल्प्यते लाघवात् भ्रमत्वज्ञानानामननुगतस्वरूपेण विरोधित्वसंभवस्य बहुशोन्यत्र
प्रतिप्रतिपादितत्वात् एवं च सत्यामनुमित्सायां सिद्धिसत्त्वेप्यनुमित्युत्पादस्य परेषामप्यानुभविकत्वादनुमित्सायास्तत्रोत्तेजकत्वमपी रामः
त्यवश्यं पक्षतानुमितिहेतुः न च सिद्ध्यात्मकपरामर्शसहस्रमेव यत्र दंडो रक्त इत्यादिविशेषणतावच्छेदकप्रकारकं रक्तत्वांशे भ्रमत्वज्ञा ३२

नास्कंदितत्वंतत्रोत्तरकालंरक्तत्वादिविशिष्टवैशिष्ट्यस्यप्रत्यक्षादेर्वारणार्थंतत्तद्धर्मत्वज्ञानव्यक्तीनांतादृशविशिष्टवैशिष्ट्यावगाहिज्ञानप्रतिबं
धकल्पनायांनवापिगौरवमस्माकंतुसिद्धिरविरोधित्वात्तत्रवन्ह्यनुमितेरेवोत्पादेनान्यत्रक्लृप्तेनभिन्नविषयकानुमितिसामग्र्याःप्रतिबं
धकत्वेनैवतत्ररक्तत्वविशिष्टवैशिष्ट्यप्रत्यक्षमितिवाच्यंयत्साध्यकसिद्धिपरामर्शदशायांनवस्त्वंतरेपिकदापिभ्रमत्वाद्यासंजनतत्रैवोक्त
क्रमेणपक्षतायाहेतुत्वव्यवस्थापनादित्याहुःयत्तुपक्षतायाअनुमित्यहेतुत्वेसिद्ध्यात्मकपरामर्शदशायांभिन्नविषयकप्रत्यक्षबुभुत्सास
त्वेऽनुमि नेर्वारणायतत्तद्बुभुत्सायामनुविरोधित्वकल्पनेगौरवंस्यादतःपक्षताहेतुरितिनतुच्छपक्षतायाःकारणत्वेनतदनुमित्साविरह
कूटविशिष्टसिद्धित्वेनप्रतिबंधकतायाएवनतत्तदनुमित्साविरहव्यक्तीनांविशेष्यविशेषणभावव्यत्यासेनानंतविरोधित्वकल्पनायांविपरी
तगौरवात् अतएवपक्षतायाअनुमित्यहेतुत्वेकथितस्थलएवभिन्नविषयकप्रत्यक्षादेरुत्पत्तयेतत्तद्बुभुत्साविरहविशिष्टानुमितिसामग्री
त्वेनैवतादृशप्रत्यक्षादौप्रतिबंधकत्वंकल्प्यमितितत्रबुभुत्साव्यक्तीनामुत्तेजकत्वकल्पनेगौरवंस्यादित्यपिप्रत्युक्तंभिन्नविषयकप्रत्यक्षादि
कंतत्तद्बुभुत्साविरहविशिष्टपरामर्शत्वेनविरोधित्वमपेक्ष्यनिरुक्तपक्षताविशिष्टपरामर्शत्वपर्यवसितेनानुमितिसामग्रीत्वेनविरोधित्वक
ल्पनायामेवगौरवादित्यास्तांविस्तरः॥ ॥ इतिजागदीश्यंतर्गतपक्षतासमाप्ता॥

॥ श्रीकाशीनिवासिना श्रीगोवर्द्धनपालितेनबहुरसिकजनमनोविनोदाय॥ श्रीकाश्यांस्वकीयहरिहरयन्त्रालयेमुद्रितःमीः पौषकृष्ण
१२ संवत् १९४७

